# चन्दमामा

सम्पुटः - १८ जून् - २००१ सञ्चिका - ३



## अन्तरङ्गम्



Printed and Published by B. Viswanatha Reddi at B.N.K Press Pvt. Ltd., Chennai–600 026 on behalf of Chandamama India Limited, No.82, Defence Officers Colony, Ekattuthangal, Chennai - 600 097. Editor: Viswam

## एतस्य अङ्कस्य विशेषाः



मानवधर्मः
(वेतालकथा)

यक्षपर्वतः



धनात् अपि श्रेष्ठम्



भारतगौरवगाथा



किं भवतां प्रियबान्धवाः सन्ति विदेशे ?
किं ते गृहबान्धव्यात् वञ्चिताः ?



तेभ्यः भारतीयभाषया प्रकाश्यमानां चन्दमामां काञ्चित् उपायनीकुर्वन्तु ।
तेषां भाषया एव भारतीयपरम्परां परिचाययन्तु ।




## ग्राहकशुल्कम्

(वायुयानेन सर्वदेशान् प्रति अपि)

वार्षिकं (१२ सञ्चिकाः) - रू.१००/-

भवदीयं धनं D.D.द्वारा/धनादेश(M.O.)द्वारा वा 'Chandamama India Limited' नाम्ना प्रेषयन्तु ।

सङ्केतः -

**Subscription Division**
**CHANDAMAMA INDIA LIMITED**
New82(Old92), Defence Officers' Colony, Ekkatuthangal,
CHENNAI - 600 097
E.mail : subscription@chandamama.org

चन्दमामा उपायनीक्रियताम्, येन गृहपुष्पम् उपायनीकृतम् इव स्यात् !!

सम्पादकः -
*विश्वम्*

प्रतिकृतिप्राप्त्याद्यर्थं सम्पर्क्यताम्

**चेन्नै -**
*श्रीमती अभिरामि स्वामी*
Ph - 044-2347384, 2347347399

**बेङ्गलूरु -**
*श्री सुधीर सलारिया*
Ph - 080-5598859/5550821/5245265

**कोल्कत्ता -**
*श्री आशिष लेहा*
Ph - 033-2349529

**देहली -**
*श्रीमती मोना भाटिया*
Ph - 011-6515111/6565513/6565516

**मुम्बयी -**
*श्री शकीलमुल्ला*
Ph - 022-2661599/2661946/2653057

**चन्दमामापत्रिकाविभागः**
New82(Old92), Defence Officers' Colony,
Ekkatuthangal, CHENNAI - 600 097
PH / FAX - 2347384 / 2347399
E-mail : chandamama@chandamama.org

**अमेरिकार्थं**

एकस्याः पत्रिकायाः कृते - $ २
वार्षिकग्राहकशुल्कम् - $ २०

सम्पर्कसङ्केतः -
INDIA ABROAD
43 West 24th Street,
New York, NY 10010
Tel:(212) 929-1727 Fax:(212) 627-9503

*संस्थापकौ -*

**चक्रपाणिः नागिरेड्डी च**

# गुणोत्कर्षः स्यात् बालेषु

गुजरातराज्ये भूकम्पकारणतः ये शतशः जनाः मृताः तेषां जातिमतादयः केनापि न परिगणिताः । ये तु सजीवं स्थितवन्तः ते अपि तां घोरां मरणमालां दृष्ट्वा भेदभावानां निस्सारताम् अवगतवन्तः ।

वर्णजातिमतादिभेदम् अपरिगणय्य घोरविपत्तिः एषा मानवीयमौल्यानि अजागरयत् यत् ततः स्पष्टीभवति – प्रीत्यनुकम्पादयः गुणाः जगति अद्यापि अक्षुण्णतया जीवन्ति इति । किन्तु खेदस्य विषयः नाम – तान् मानवीयगुणान् तृणीकृत्य वयं दैविकीं मानवकृतां च विपत्तिं स्वागतीकुर्मः इति ।

अद्यतनशैक्षणिकपाठनक्रमे मानवीयमूल्यानां विकासार्थं पर्याप्तमात्रेण प्राधान्यं दत्तं न दृश्यते । तत्रापि विकसितदेशेषु अयं गुणह्रासः प्राधान्येन दृश्यते । तत्रत्या शिक्षणपद्धतिः छात्रेषु तेषां गुणानां विकासे सर्वथा असफला दृश्यते । मानवमस्तिष्के विविधविषयान् अधिकृत्य विवरणपूरणम् एव शिक्षणम् इति मन्यते जनैः । अनुशासनप्रीतिवात्सल्यादयः न वर्ध्यन्ते । वस्तुतः शिक्षणतः चारित्र्यवृद्धिः खलु भवेत् ? यदि सच्चारित्र्यम् एव न स्यात् तर्हि म.नवसमूहः शिलायुगं प्रविशेत्, यत्र च मात्स्यन्यायः विजृम्भते ।

बालकेषु गुणवत्ता सर्वथा नास्ति इति न । कानिचन उदाहरणानि अस्माकम् आशां पल्लवयन्ति । अन्यम् आयुधेन पीडयितुम् उद्युक्तायाः बालिकायाः हस्तात् कश्चित् आज्ञाबलेन आयुधानि पातितवान् इति काचित् वार्ता श्रूयते । भारते अपि विपत्तिनिवारणार्थं बालैः कृताः प्रयत्नाः तदा तदा श्रुतिपथम् आयान्ति एव । 'द्वादशवर्षीया वित्तकोषरक्षकस्य पुत्री बुद्धिमत्तया पितुः रक्षणं कुर्वती वित्तकोषीयधनलुण्ठनप्रसङ्गं निवारितवती' इत्येषा घटना अत्र उदाहरणम् ।

चन्दमामा तु बालेषु स्निह्यति आधिक्येन । अतः बालेषु गुणवृद्धिः स्यात्, ते उत्तमस्य समाजस्य प्रजाः स्युः, शान्त्या सुखेन सन्तृप्त्या च जीवेयुः इति अभिलषति चन्दमामा ।






# HERO LUNCH BOX




## OFFER

BUY ANY HERO **KID'S CYCLE**, GET A **LUNCH BOX** FREE



SALSA



LAMBADA



BOSS



ROBO COP



PIRANHA



TERMINATOR



ACTIVE



CADET DX



BUZZ Jr

OFFER ALSO AVAILABLE ON: LIMBO, SPARKY, LI'L ANGEL, KIDD DX, BANDIT, SHERIFF & REX PHANTOM

Cycles also available without this offer. Offer valid from 15-4-01 to 31-5-01.

HTA.5810.2001

# वार्ता सञ्चिका

## नामावशेषतां गतः 'मिर्'

रशियादेशीयं 'मिर्'नामकम् अन्तरिक्षकेन्द्रम् अन्तिमश्वासम् अत्यजत् गतस्य मार्च्मासस्य २३ तमे दिनाङ्के । १९८३ तमे वर्षे, तन्नाम पञ्चदशवर्षेभ्यः पूर्वं, प्रेषितः आसीत् सः ।

यद्यपि तत् वर्षद्वयनिमित्तम् एव सज्जीकृतम् आसीत्, तथापि सुदीर्घकालं कार्यम् अकरोत् अन्तरिक्षतन्त्रज्ञानस्य उत्कृष्टता-कारणतः । गतेषु १५ वर्षेषु रशियादेशीयाः अमेरिकादेशीयाः च शताधिकाः गगनयात्रिणः तत्र पदं स्थापितवन्तः । १६५०० प्रयोगाः तेन कृताः, ८६,२०० वारं तेन अन्तरिक्षप्रयाणं कृतम् ।

'मिर्' सोवियत्सङ्घस्य अन्तरिक्षकार्याङ्गतया आकाशं प्रति प्रेषितम् आसीत् । किन्तु १९९१ तमे वर्षे यदा सोवियत्सङ्घः विभक्तः तदा रशियादेशेन एतस्य समग्रः निर्वहणव्ययः वोढव्यः अभवत् । प्रतिवर्षं २५० मिलियन्डालर्मितम् एतं महाव्ययं वोढुं तस्य सामर्थ्यं न आसीत् । अतः शाश्वतशत्रुरूपेण स्थितस्य अमेरिकादेशस्य साहाय्यं तेन स्वीकृतम् । ततः बहवः गगनयात्रिणः तत्र गताः, विविधाः प्रयोगाश्च प्रवृत्ताः । उभयोः देशयोः स्नेहवर्धकम् अभवत्



एतत् । एतस्य निर्माणार्थं यत् तन्त्रज्ञानम् उपयुक्तम् तस्य साहाय्येन अमेरिकादेशेन अपि एकम् अन्तरिक्षकेन्द्रं सज्जीकृतं, यच्च इदानीम् अस्ति अन्तरिक्षे ।

१४० टन्भारयुक्तं 'मिर्' फेसिफिक्महासागरे अपतत् भूकेन्द्रतः क्रियमाणं निग्रहम् अतिक्रम्य । अल्पम् अपि दोषम् अकृत्वा रशियाविज्ञानिभिः सज्जीकृतम् एतत् सागरे पतनं प्राप्य १५०० भागैः विभक्तं सत् खण्डशः भग्नम् ।

## 'मिर्' अधिकृत्य इतोऽपि किञ्चित्...

☛ पञ्चदशवर्षात्मके जीवितावधौ मीरिण १२ वर्षाणि ६ मासान् च अन्तरिक्षे स्थितम् । वलेरी पोलिकोव्वर्यः तस्मिन् ४३६ दिनानि निरन्तरवासं कृतवान् आसीत् । शन्नोन् लूसिङ्वर्या च तत्र १८८ दिनानि स्थितवती । कयाचित् महिलया अन्तरिक्षे कृतः सुदीर्घः वासः अयम् ।

☛ यदा तत् भूपरिधिं प्राविशत् तदा अग्निसात् जातम् । तस्य अन्तः शतपुस्तकात्मकः ग्रन्थालयः यस्मिन् च बैबल्-कुरान्ग्रन्थौ अपि आस्तां, प्रथमगगनयात्रिकस्य यूरिगगारिनस्य भावचित्रम्, ११ टन्मितानि वैज्ञानिकोपकरणानि च आसन् ।

☛ तस्य नाशस्य दिनद्वयात् पूर्वं रशियादेशीयाः सांसदः अध्यक्षं व्लाडिमिर्पुटिन्वर्यम् अभ्यर्थितवन्तः आसन् यत् कथमपि एतस्य नाशः निवारणीयः, यतः तत् इतःपरम् अपि कार्योपयोगि भवितुम् अर्हति इति । तेषु सांसदेषु उभौ पूर्वं गगनयात्रिकौ आस्ताम् ।

### मङ्गलस्य चित्राणि गृहीतानि भूमितः

शालीनहरियल्का, तन्मयहिवाडकर्, विकासशार्ङ्गधरः चेति त्रयः भारतीयाः तरुणविज्ञानिनः अन्यदेशीयैः षड्भिः विज्ञानच्छात्रैः सम्भूय म्यालिन्नगरस्थे 'नासा'सम्बद्धे मङ्गलग्रहीये संशोधनालये स्थित्वा चित्रग्राहकद्वारा मङ्गलग्रहस्य उत्तमानि चित्राणि स्वीकृतवन्तः सन्ति । 'अस्माभिः ग्रहस्य अस्य अपूर्वाणि चित्राणि गृहीतानि । तत्रत्याः गर्तखातादयः, जलस्योपस्थितिः च एतेषु चित्रेषु स्फुटतया दृश्यन्ते' इति वदन्ति ते ।

## पञ्चवर्षवयस्कस्य अतीतानि ५० वर्षाणि !!



'डेन्नीस्' इति चित्रविशेषस्य नाम । पञ्चवर्षीयस्य बालकस्य चित्रं तत् । तस्य निर्माणस्य अनन्तरम् अतीतानि ५० वर्षाणि ! जनप्रियम् एतत् विनोदचित्रं सज्जीकृतवान् हेन्रि हङ्क् केचम्वर्यः । प्रपञ्चस्य अनेकासु पत्रिकासु एतत् चित्रं दृष्टिगोचरं भवति । एषः हेन्नीस्मेनिस् न अन्यः, अपि तु केचम्वर्यस्य पुत्रः एव । यदा बालः चतुर्वर्षीयः आसीत् तदा तदीया माता आगत्य कदाचित् पतिम् उक्तवती – "भवतः पुत्रः दुश्चेष्टाः करोति बहुधा" इति । केचम्वर्यः चलनचित्रक्षेत्रे चित्रनिर्माता आसीत् । (इदानीं सः ८१ वर्षीयः) १९५१ तमे वर्षे तेन 'डेन्नीस्मेनिस्'चित्रं सज्जीकृतम् । तस्य मातापितरौ मिचेल्-विल्सनौ, बान्धवाः चापि तेन चित्रिताः । जोयि, रफ्, (शुनकः)'चापि तदैव चित्रितौ । 'विचित्ता इन् कन्सास्'-चित्रे एते सर्वे योजिताः तेन । 'मया निर्मितः एषः डेन्नीस्मेनसः कदापि बालत्वं न परित्यजेत्' इति अभिप्रैति केचम्वर्यः । अथ मेनस् बालानां यथा तथैव ज्येष्ठानाम् अपि प्रियः अस्ति ।

## भूकम्पव्यायामः

गुजराते बालेभ्यः शिक्षणं दीयमानम् अस्ति – भूकम्पाद्यवसरे भवनात् कथं निर्गत्य आत्मरक्षणं करणीयम् इति । शालारम्भस्य, मध्यविरामस्य, अल्पविरामस्य, समाप्तेः वा यदा घण्टा वाद्यते तदा बालैः यथापूर्वं मन्दगामिता न प्रदर्श्यते इदानीम् । यदा क्रीडाङ्गणे मेलनस्य निमित्तं घण्टा वाद्यते तदा अन्तिच्छात्रम् अपि अविहाय सर्वैः झटिति क्रीडाङ्गणे उपस्थातव्यम् अध्यापकेन सह । प्रधानाध्यापकः अन्ते उपस्थितः भवति । कर्णावत्याम् (अहमदाबाद्) कस्मिंश्चित् विद्यालये सहस्राधिकाः बालाः क्षणाभ्यन्तरे सम्मिलिताः भवन्ति क्रीडाङ्गणे ।

## शतकोट्यधिकाः वयम् ...

गते मेमासे प्रथमे दिनाङ्के भारतस्य जनसङ्ख्या शतकोटिसीमाम् अतिक्रान्तवती । फेब्रवरीमासस्य २८ तमे दिनाङ्के २००१ तमवर्षीयजनगणनायाः प्रथमः स्तरः समाप्तः अस्ति । मार्च्मासे प्रकाशितं सङ्ख्याविवरणं ज्ञापयति यत् दशमासाभ्यन्तरे जनसङ्ख्यायां २७,०१५,२४७ जनानां वृद्धिः दृश्यते इति । मार्च्मासे उपलब्धं सङ्ख्यात्मकविवरणं ज्ञापयति – देशे ५३,१२, ७७,०८८ पुरुषाः, ४९,५७, ३८,१६९ महिलाः च सन्ति इति । जनसङ्ख्याक्षेत्रे भारतस्य द्वितीयं स्थानम् । प्रथमं स्थानं चीनादेशस्य, यत्र चापि जनसङ्ख्या शतकोट्यधिका अस्ति ।

भारते अधिकषड्वर्षीयेषु साक्षरताप्रमाणम् अस्ति – ६५.८३% । पुरुषेषु साक्षराः ७५.८५%, महिलासु च ५४.१६% । केरलेषु साक्षराणां प्रमाणम् अधिकम् (९०.९२ %) । द्वितीयं स्थानम् अर्हति मिझोराम् (८८. ४९ %)। तृतीयं स्थानं लखदीवद्वीपस्य (८७.५२ %)।

फेब्रवरीमासस्य द्वितीयसप्ताहात् मासान्त्यं यावत् १७,००,००० जनाः सर्वेक्षणकाराः निरीक्षकाः च दशलक्षकुटुम्बान् दृष्टवन्तः ६,४०,१०० ग्रामेषु ५,२०० नगरेषु च । विविधविषयकाः अंशाः तैः सङ्गृहीताः । २००१ तमे वर्षे प्रवृत्तम् एतत् सर्वेक्षणम् चतुर्दशम् । प्रथमं सर्वेक्षणं तावत् १८७१ तमे वर्षे प्रवृत्तम् आसीत् ।

वेताल-
कथा

# मानवधर्मः

कृतनिश्चयः त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा शवं स्कन्धे आरोप्य यथापूर्वं मौनेन श्मशानाभिमुखं प्रस्थितवान्। तदा शवान्तर्गतः वेतालः अवदत् - ''राजन्! राजवंशे जाताः बाल्यतः एव साहसपूर्णविद्यासु निपुणाः भवन्ति। अतः एव ते कठोरं परिश्रमं कुर्वन्ति। भवान् अपि तादृशः एव। ते अहोरात्रं लक्ष्यप्राप्त्यर्थं समस्याः सम्मुखीकुर्वन्ति। किन्तु अन्ते यदा लक्ष्यप्राप्तिकालः सन्निहितः भवति तदा चित्तचाञ्चल्यकारणतः भाग्यक्षणं दौर्भाग्यक्षणरूपेण परिवर्तयन्ति। स्वपादस्य उपरि कुठाराघातं कुर्वन्तः स्वयम् एव स्वस्य अधःपतनस्य कारणं भवन्ति। सः



उद्दण्डदेशस्य भावी महाराजः श्रुतवर्मा एतादृशम् एव दोषं कृतवान् आसीत् । यदा अमूल्यः अवसरः प्राप्तः आसीत् तदा मानसिकचञ्चलतायाः कारणतः तं तिरस्कृतवान् सः । भवतः श्रमपरिहारार्थं तस्य कथां श्रावयामि । शृणोतु तावत्'' इति ।

ततः वेतालः कथाम् आरब्धवान् -

प्रवालदेशस्य शासकस्य मरुद्वर्मणः एका पुत्री जाता । विवाहस्य बहुवर्षाणाम् अनन्तरं पुत्रीं प्राप्य मरुद्वर्मा नितरां सन्तुष्टः । पूर्णिमायाः दिने रात्रौ जातायाः तस्याः नाम कौमुदी इत्येव तेन कृतम् । दिनेषु गच्छत्सु वयसा सह तस्याः सौन्दर्यमपि वर्धितम् । सा अत्यन्तं बुद्धिमती जाता ।

कौमुदीं यः परिणेष्यति सः एव प्रवालदेशस्य राजा भविष्यति इति मरुद्वर्मणा निश्चितम् आसीत् । कौमुद्याः बाल्ये एव 'वरः' अपि तेन निश्चितः आसीत् । मरुद्वर्मणः भगिन्याः पुत्रः श्रुतवर्मा एव सः । श्रुतवर्मा उद्दण्डदेशस्य भावी महाराजः आसीत् ।

यदा श्रुतवर्मा प्रवालदेशम् आगच्छति स्म तदा राजगुरोः मुकुन्दाचार्यस्य समीपं विद्याभ्यासार्थं गच्छति स्म । प्रधानमन्त्रिणः रत्नकेसरिणः पुत्रः मणिमान्, कौमुदी चापि विद्याभ्यासार्थं तत्र गच्छतः स्म ।

बाल्यावस्थायाः समाप्तिं यावत् त्रयाणां विद्याभ्यासः एकत्र एव प्रवृत्तः । विद्याभ्यासकाले मणिमान् बहुवारं कौमुद्या सह चर्चां करोति स्म । किन्तु द्वौ अपि औचित्यसीमाम् अतिक्रम्य कदापि न गच्छतः स्म । तयोः परस्परस्नेहः आदरः अभिमानः च कदापि न्यूनः न अभवत् । मुकुन्दाचार्यः द्वयोः चर्चां ध्यानेन शृणोति स्म । तयोः भावगर्भितैः विचारैः सः नितरां प्रभावितः आसीत् । श्रुतवर्मा अपि मध्ये मध्ये चर्चायां भागं वहति स्म । किन्तु कदाचित् तत्र तस्य सामर्थ्यम् अपर्याप्तं भवति स्म ।

बाल्यावस्थायाः समाप्तेः अनन्तरं कौमुद्याः विद्याभ्यासः अन्तःपुरे एव अनुवृत्तः । किन्तु पितुः प्रेरणया सा पुरुषवेषं धृत्वा शस्त्राभ्यासं करोति स्म । अतः मणिमता, श्रुतवर्मणा च यत् अभ्यस्तम् आसीत् तत् तया अपि अभ्यस्तम् । एवं त्रयाणाम् अपि मैत्री यथापूर्वम् आसीत् ।

महाराजः मरुद्वर्मा उभयोः अपि युवकयोः विषये प्रीतिमान् आसीत् । श्रुतवर्माणं 'भावी जामाता' इति, मणिमन्तं 'मेधावी' इति च

सः भावयति स्म । मणिमता सह पुत्र्याः स्नेहपूर्वकव्यवहारं दृष्ट्वा मरुद्वर्मा कदाचित् किञ्चिदिव भीतः भवति स्म । सौन्दर्येण, शास्त्रविद्यया च मणिमान् श्रुतवर्मतः उत्तमतरः समीचीनतरः च आसीत् । द्वयोः भेदः नाम एकः राजकुमारः, अपरः मन्त्रिपुत्रः इति । 'मणिमान् अपि उत्तमः क्षत्रियपुत्रः एव । किन्तु यदि पुत्री मणिमता आकृष्टा भवेत् तर्हि काश्चन समस्याः सम्मुखीकरणीयाः भवेयुः' इति चिन्ता आसीत् मरुद्वर्मणः । श्रुतवर्मणः मातापित्रोः पूर्णः विश्वासः आसीत् यत् आवयोः पुत्रः एव मरुद्वर्मणः जामाता भविष्यति इति । श्रुतवर्मा अपि कौमुद्याम् अनुरक्तः आसीत् ।



मरुद्वर्मा एतान् सर्वान् विषयान् जानाति स्म । पूर्वनिश्चितविषये परिवर्तनं यदि भविष्यति तर्हि परिणामः सम्यक् न स्यात् इत्यपि मरुद्वर्मा अवगतवान् आसीत् । एतम् अंशं मनसि निधाय सः पुत्र्याः मनोगतं ज्ञातुम् इष्टवान् ।

तस्याः सख्या मालत्या सह कदाचित् सम्भाषणात् तेन अवगतं - 'कौमुदी श्रुतवर्मणि अनुरागवती सर्वथा न, प्रत्युत बन्धुत्वकारणतः तस्मिन् स्नेहमात्रं प्रदर्शयति । मणिमान् एव पतिः भवितुं योग्यः इति कौमुद्याः विचारः । तस्मिन् एव अनुरक्ता अस्ति सा' इति । मालत्या एतत् अपि उक्तम् आसीत् यत् कौमुद्यां मातृदेशस्य विषये महान् आदरः अस्ति इति ।

मालत्याः वचनेन एतत् तु स्पष्टतया ज्ञातं यत् कौमुदी कस्यापि अपरदेशस्य राज्ञी भवितुं न इच्छति इति । 'यदि मणिमन्तं परिणयेयं तर्हि स्वदेशे एव तिष्ठन्ती पत्या सह राज्यभारं निर्वोढुं शक्नुयाम् इति मम पुत्र्याः विचारः अस्ति । एवं यदि न भवेत् तर्हि प्रवालदेशस्य शासनभारः कस्मैचित् दातव्यः भवेत् । यतः मम उत्तराधिकारी अन्यः कोऽपि नास्ति । किन्तु मणिमान् न राजकुमारः । श्रुतवर्मा तु राजकुमारः, किन्तु तस्मै पुत्र्याः दाने क्लेशद्वयं - मद्देशः राजविहीनः भविष्यति इति एकं, कौमुदी तं न इच्छति इति अपरम् । इदानीं किं करणीयं मया ?' इति महाराजस्य चिन्ता आरब्धा । अतः सः किङ्कर्तव्यतामूढः जातः ।

किन्तु एतत्सम्बद्धम् अपरं रहस्यं महाराजः न जानाति स्म । श्रुतवर्मणा कौमुद्याः मनोगतं ज्ञातम् आसीत् । सः आ बाल्यात् कौमुदीं 'भाविनी पत्नी' इत्येव भावयन् आसीत् ।



कौमुदी मणिमति अनुरक्ता अस्ति इति ज्ञात्वा सः निराशः जातः आसीत् । हृदयस्योपरि कुठाराघातः जातः इव विह्वलः अभवत् सः । बहुधा चिन्तनं कृत्वा सः मातुलं सर्वम् उक्तवान् ।

महाराजः कतिचन दिनानि चिन्तनं कृत्वा भागिनेयम् आहूय अवदत् – ''वत्स, कौमुद्याः विवाहविषयकं चिन्तनं कृत्वा अहं श्रान्तः । अन्ते एकं निर्णयं कृतवान् अस्मि । श्वः एव भवान् मणिमता मिलतु । 'भवतः, कौमुद्याः च अनुरागविषयम् अहं ज्ञातवान् अस्मि' इति तं स्पष्टरूपेण उक्त्वा – 'यावत् भवान् कौमुदीम् इच्छति तावत् अहम् अपि इच्छामि । किन्तु अहं बन्धुत्वस्य प्रभावं मध्ये प्रवेशयितुं न इच्छामि । अतः आवयोः बलपरीक्षा भवतु । विजेता कौमुदीं प्रवाल-देशसिंहासनं च प्राप्नोतु' इति । मणिमान् अवश्यम् एतं प्रस्तावम् अङ्गीकुर्यात् । भवान् सर्वां शक्तिं पणीकृत्य कौमुदीं प्राप्नोतु । भवतः विजयः असम्भवः यदि स्यात्, अथवा परिस्थितिः प्रतिकूला यदि स्यात्, तर्हि अहं तादृशं प्रबलम् उपायं चिन्तयिष्यामि, येन भवतः विजयः निश्चितः स्यात्'' इति ।

मातुलस्य वचनानि श्रुत्वा क्षणं यावत् विचिन्त्य श्रुतवर्मा अवदत् – ''मातुल ! मम, मणिमतः च पराक्रमः समानः इति तु सत्यम् एव । किन्तु मणिमति अधिकः आत्मविश्वासः अस्ति । तस्य आत्मविश्वासः एव तदीयं धैर्यं साहसं च द्विगुणितं करोति । अतः एकं कार्यं कर्तुं शक्यते । आरावली-प्रान्ते कृष्णचन्द्रनामकः कश्चित् गुरुकुलं चालयति । तस्य विषये भवान् अपि श्रुतवान् स्यात् एव । भाविनां महाराजानां कृते अस्त्रशस्त्रादिविद्यासु प्रशिक्षणं दीयते तेन । अहं श्वः एव तत्र गमिष्यामि । कृष्णचन्द्रस्य शिष्यः भूत्वा सामर्थ्यं प्राप्स्यामि । तदनन्तरं भवतः कथनानुसारम् आचरणं वरम् इति भाति मम'' इति ।

महाराजः श्रुतवर्मणः वचनम् अङ्गी-कृतवान् । ततः श्रुतवर्मा कृष्णचन्द्रसमीपं गतवान् । तत्रैव स्थित्वा षण्मासान् यावत् एकाग्रचित्ततया युद्धविद्याः अधीतवान् च ।

प्रशिक्षणस्य समाप्तेः अनन्तरं कृष्ण-चन्द्रः श्रुतवर्माणं पृष्टवान् – ''भवता उक्तम् आसीत् यत् प्रवालदेशस्य राजा मम मातुलः इति । तस्य देशस्य मन्त्रिणः पुत्रं मणिमन्तं भवान् जानाति किम् ?'' इति ।



गुरोः प्रश्नेन आश्चर्यचकितः श्रुतवर्मा अवदत् - ''आम्, अहं तं सम्यक् जानामि एव । किमर्थं भवता एषः प्रश्नः पृष्टः ?'' इति ।

कृष्णचन्द्रः मन्दहासपूर्वकं अवदत् - ''मम एकः अभ्यासः अस्ति । छद्मवेषेण अहं विविधदेशान् गच्छन् भवामि । अतः तत्र मां कोऽपि न अभिजानाति । अत्र भवतः आगमनस्य पक्षात् पूर्वं प्रवालदेशे वसन्तोत्सवः आचरितः । तदा अहम् अपि तत्र उपस्थितः आसम् । तत्र मया मणिमतः साहसपूर्वकविन्यासाः दृष्टाः । अचञ्चलेन आत्मविश्वासेन, मणिदीपः इव प्रकाशमानेन योधेन एव तादृशविन्यासः प्रदर्शयितुं शक्यः, न तु इतरैः । तस्य कौशलं कदापि न विस्मरामि अहम् । स्वदेशं गत्वा भवान् मणिमन्तं वदतु यत् गुरुः भवन्तं निमन्त्रयन् अस्ति इति । सः एकवारम् अवश्यं मम आश्रमम् आगच्छतु'' इति ।

गुरोः वचनं श्रुत्वा श्रुतवर्मा क्षणं यावत् स्तब्धः अभवत् । अन्ते आत्मानं नियन्त्रयन् मन्दस्वरेण सः उक्तवान् - ''तद्दिने ये विन्यासाः प्रदर्शिताः तेषु मया अपि भागः ऊढः आसीत्'' इति ।

श्रुतवर्मणः कथनं श्रुत्वा आश्चर्यं प्रकटयन् कृष्णचन्द्रः - ''एवम् ! किं भवान् अपि तत्र आसीत् ?'' इति उक्त्वा मन्दहासं प्रकाशितवान् ।

परेद्यवि श्रुतवर्मा प्रवालदेशं गत्वा मातुलेन मिलित्वा अवदत् - ''मातुल,

कृष्णचन्द्रस्य शिष्यत्वस्य प्राप्तितः मम आत्मविश्वासः सामर्थ्यं च प्रवृद्धम् अस्ति । किन्तु मम भाति यत् रक्तसम्बन्धरूपायाः योग्यतायाः आधारेण कौमुद्याः इच्छायाः विरुद्धं व्यवहारः न उचितः इति । मणिमान् एव कौमुदीं परिणयतु नाम'' इति ।

एवं कथां श्रावयित्वा वेतालः अवदत् - ''राजन्, मया पूर्वमेव उक्तम् आसीत् - श्रुतवर्मा अविवेकी इति । सः षण्मासात्मकं प्रशिक्षणं प्राप्तवान् । कठोरं परिश्रमं च कृतवान् । अन्ते स्वस्य पादस्य उपरि स्वयमेव कुठाराघातं किमर्थं कृतवान् सः ? लक्ष्यप्राप्तिसमयः यदा सन्निहितः तदा चित्तचाञ्चल्येन आत्मविश्वासस्य अभावेन च सः सौभाग्यप्राप्ते अवसरं तिरस्कृतवान् । एवं ननु ? किं सः अविवेकी न ? एताद्दशम् अविवेकिनं कुत्रापि किं दृष्टवान् भवान् ? मम एतेषां सन्देहानाम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्त्रधा भग्नं भवेत्'' इति ।

तदा त्रिविक्रमः अवदत् - ''श्रुतवर्मा स्वयं कृष्णचन्द्रस्य समीपं शिष्यत्वेन गतवान्, न तु कस्यापि कथनं पुरस्कृत्य । यतः कृष्णचन्द्रे महादरवान् आसीत् सः । तादृशः महान् गुरुः मणिमन्तं निमन्त्रितवान् । एतेन स्पष्टतया ज्ञायते यत् कृष्णचन्द्रः मणिमतः युद्धविन्यासैः अत्यन्तं प्रभावितः अस्ति इति । यद्यपि श्रुतवर्मणा स्वयं कथितं -'मया अपि तत्र भागः ऊढः आसीत्' इति, तथापि कृष्णचन्द्रेण तस्य प्रशंसा न कृता, प्रत्युत मन्दहासं प्रकटय्य मौनम् आश्रितम् । कृष्णचन्द्रस्य व्यवहारेण श्रुतवर्मा ज्ञातवान् यत् मयि मणिमति च कः भेदः अस्ति इति, द्वयोः समानता कदापि भवितुं न अर्हति इति च । यदि द्वयोः युद्धं प्रचलेत् तर्हि श्रुत-वर्मणः विजयस्य आशा एव न स्यात् । अतः एव श्रुतवर्मा निर्णीतवान् यत् अहं कौमुदीं परिणेतुं योग्यः न इति । अत्र चित्तचाञ्चल्यं सर्वथा कारणं न । एवं निर्णयं कुर्वता तेन राजनीतेः मानवधर्मस्य च पालनं कृतम् इव'' इति ।

एवं राज्ञः मौनभञ्जने सफलः वेतालः ततः शवसहिततया अदृश्यः भूत्वा वृक्षे लम्बमानः अतिष्ठत् ।





# यक्षपर्वतः

## ४

*[खड्गवर्मजीवदत्तौ मान्त्रिकस्य, जटामय्याः राक्षस्याः च अन्वेषणार्थं गतवन्तौ । किन्तु ताभ्यां तौ गुहायां कुत्रापि न दृष्टौ । सुरङ्गमार्गेण गत्वा तौ एकं शिथिलभवनसमूहं प्राप्तवन्तौ । तत्रत्येषु भवनेषु कस्मिंश्चित् निवसन्ती उपासिका मान्त्रिकम् आज्ञापितवती यत् खड्गवर्मजीवदत्तौ सजीवं गृहीत्वा आनेतव्यौ इति । छुरिकाहस्तः मान्त्रिकः जटामयराक्षस्या सह ततः निर्गतवान् । तदनन्तरम्...]*

पुरतः स्थितानि भवनानि निर्निमेषं पश्यन् स्थितवान् जीवदत्तः । 'एतत् नगरं कदा निर्मितं स्यात् ? किमर्थम् एतत् एवं जनशून्यं जातम् ? किमर्थम् एषा दशा आगता अत्र ?' इति चिन्तयन् आसीत् सः । किन्तु खड्गवर्मा तु जटामयराक्षसीमान्त्रिकयोः विषये एव चिन्तयन् आसीत् । 'यावच्छीघ्रं तौ संहृत्य इतः निर्गन्तव्यम्' इति चिन्तनम् आसीत् तस्य ।

अत्रान्तरे अनतिदूरे स्थितायाः इष्टिका-भित्तितः कस्यापि वस्तुनः पतनशब्दः श्रुतः इव । एतत् श्रुत्वा झटिति उत्थितः खड्गवर्मा अवदत् - ''जीवदत्त ! कोऽयं ध्वनिः ? अस्माकम् उपरि आक्रमणार्थं कोऽपि प्रयत्नः प्रचलन् न स्यात् खलु ? जागरूकतया स्थातव्यम् अस्माभिः'' इति ।

तौ भित्तिसमीपं गत्वा सर्वत्र परिशीलनं कृतवन्तौ । तावता भित्तेः उपरि स्थितस्य मान्त्रिकस्य उच्चध्वनिः श्रुतः - ''भो भो नराधमौ ! इदानीम् एव भवन्तौ महाभूताय बलिरूपेण अर्पयिष्यामि'' इति । एवं वदन् सः स्वस्य छुरिकां तौ उद्दिश्य क्षिप्तवान् ।



खड्गवर्मा मान्त्रिकस्य छुरिकातः आत्मानं रक्षन् – ''अये मूर्खमान्त्रिक ! अस्मान् जागरूकतावचनं वदन् भवान् आत्मानम् अपायगर्ते पातितवान् अस्ति'' इति वदन् किञ्चित् अग्रे गत्वा मान्त्रिकस्य हस्तं गृहीत्वा बलात् आकृष्टवान् । तेन मान्त्रिकः भित्तितः पतितः ।

अत्रान्तरे – ''बलिः, बलिः । बलिः आवश्यकी'' इति वदन्ती जटामयी राक्षसी भित्तेः उपरि आगत्य स्थितवती । स्वगुरोः मान्त्रिकस्य का गतिः जाता इति सा न जानाति स्म । महता उत्साहेन आगत्य भित्तेः उपरि स्थितवती आसीत् सा ।

इतस्ततः यदा दृष्टिः प्रसारिता तदा तया अवगतं यत् स्वस्य गुरोः कीदृशी दुर्गतिः जाता इति । 'हा !' इति आक्रन्दनं कृतवती सा । तावता जीवदत्तः तस्याः पादौ गृहीत्वा आकृष्टवान् । पतन्त्याः तस्याः कटिभागे बलात् पादेन प्रहृतवान् च । ततः सः खड्गवर्माणम् अवदत् – ''मित्र ! एषः समग्रः प्रदेशः मान्त्रिकैः पूर्णः इति भाति । समीपे स्थिते कस्मिंश्चित् भवने तिष्ठन्तौ आवाम् आक्रमणात् आत्मरक्षणं करवाव'' इति ।

ततः तौ झटिति समीपस्थं किञ्चन भवनं प्रविष्टवन्तौ । तत्र कश्चन प्रकोष्ठः दृष्टः । प्रकोष्ठस्य द्वारस्य समीपे स्थित्वा तौ परितः आवलोकितवन्तौ – शत्रवः अनुसरन्तः सन्ति वा ? इति । किन्तु समीपे कुत्रापि कोऽपि न दृष्टः । जटामयराक्षसी-मान्त्रिकयोः वेदना-युक्तध्वनिः दूरतः श्रूयते स्म ।

तौ प्रकोष्ठं प्रविष्टवन्तौ । प्रकोष्ठे स्थूलाकाराः मूषकाः तयोः आगमनात् भीताः

सन्तः इतस्ततः धावितवन्तः । तावता गृध्राकारकः कश्चन उलूकः वेगेन आगत्य अभिपत्य एकं मूषकं पादाभ्यां गृहीत्वा वातायनमार्गेण उड्डीय अगच्छत् । यावत् तौ एतत् आश्चर्येण पश्यन्तौ आस्तां तावता कश्चन दण्डप्रहारः ताभ्याम् अनुभूतः । तौ व्रणितौ सन्तौ अधः पतितौ, मूर्च्छां गतौ च । उपासिकायाः सेवकाः अग्रे आगत्य हस्तं गृहीत्वा नाडीं परीक्षितवन्तः । नाडीस्पन्दनं श्वासोच्छ्वासः च तैः लक्षितः ।

"दैवात् एतौ न मृतौ । यदि एतौ मृतौ स्यातां तर्हि उपासिका अस्मान् अपि यमसदनं प्रेषयेत् । दैवात् वयं रक्षिताः" इति वदन् दीर्घं निश्श्वसितवान् एकः सेवकः ।

"एतयोः मरणं न भवेत् इत्यतः खलु दण्डाः अस्माभिः वस्त्रैः आवारिताः आसन् ? हस्तपादौ बद्ध्वा एतौ उपासिकासमीपं नेष्यामः । गच्छाम तावत्" इति उक्तवान् अपरः ।

ततः ते खड्गवर्माणं जीवदत्तं च बद्ध्वा स्कन्धे आरोप्य उपासिकासमीपं गतवन्तः ।

उपासिका मण्डपे सुसज्जे उन्नतासने उपविष्टा आसीत् । सा तीक्ष्णदृष्ट्या खड्गवर्म-जीवदत्तौ पश्यन्ती उक्तवती - "एतयोः अन्यतरः मान्त्रिकः इव भाति" इति ।

"तथा भवितुम् अर्हति आर्ये ! एतयोः अन्यतरस्य हस्ते मन्त्रदण्डसदृशः कश्चन दण्डः आसीत् । अपरस्य हस्ते सुदीर्घः खड्गः आसीत्" इति विनयेन उक्तवान् एकः सेवकः ।

"तानि मन्त्रदण्डादीनि कुत्र ? किं तानि



क्वचित् क्षिप्तानि ?" इति पृष्टवती उपासिका ।

"यत्र एतौ मूर्च्छां गतौ तत्रैव तानि पतितानि स्युः" इति उक्तवान् अपरः ।

"मूर्खाः ! झटिति गत्वा तानि आनयन्तु" इति आज्ञापितवती उपासिका । उभौ सेवकौ धावन्तौ गत्वा मन्त्रदण्डं खड्गं च आनीतवन्तौ । उपासिका तदुभयं सम्यक् परीक्ष्य - "एतानि न शक्तियुक्तानि, विशिष्टानि वा । अतिसामान्यानि एतानि । एतौ प्रकोष्ठे बन्धिनौ कृत्वा आयुधानि अपि एतयोः पार्श्वे क्षिपन्तु । अग्रे किं प्रवर्तिष्यते इति परिशीलयाम" इति सूचितवती ।

उपासिकया यथा आज्ञापितं तथैव कृतं सेवकैः । पञ्चदशनिमेषाभ्यन्तरे खड्गवर्म-जीवदत्तौ सचेतनौ जातौ । जीवदत्तः खड्ग-वर्माणम् अवदत् - "खड्गवर्मन् ! सा



उपासिका आवां सजीवं त्यक्तवती यत् तस्य किमपि विशेषकारणं स्यात् । तया विशिष्टं कुतन्त्रं किमपि रचितं स्यादेव'' इति । तावता प्रकोष्ठात् बहिः सिंहगर्जनं श्रुतम् । खड्गवर्मा झटिति उत्थाय हसन् उक्तवान् – ''एते वराकाः अस्मान् उद्दिश्य सिंहं प्रेरयित्वा अस्मान् मारयितुम् इच्छन्ति'' इति ।

''एतत् युक्तम् एव जातम् । वयं तम् एव सिंहं तान् उद्दिश्य एव प्रेरयाम । तेन अत्र निवसतः जनान् सिंहः एव मारयेत्'' इति वदन् जीवदत्तः स्वस्य मन्त्रदण्डेन भित्तिं बलात् ताडितवान् । तेन भित्तेः कश्चन भागः पार्श्वे पतितः । ततः उत्पन्नात् शब्दात् सिंहः नितरां भीतः ।

''सिंहराज ! अद्य इतः भवता मुक्तिः प्राप्यते, पर्याप्तमात्रेण आहारोऽपि'' इति वदन् जीवदत्तः खड्गवर्मणा सह प्रकोष्ठात् बहिः आगतवान् ।

अनन्तरक्षणे उपासिकायाः दश-पञ्चदश-सेवकाः उच्चैः आक्रोशनं कृतवन्तः – ''बन्धिनः पलायनं कुर्वन्तौ स्तः । तौ गृह्णन्तु'' इति । ततः ते उभयपार्श्वतः तयोः समीपम् आगतवन्तः । जीवदत्तः सिंहस्य समीपं गत्वा तान् मन्त्रदण्डेन दर्शयन् सिंहं प्रचोदितवान् । सिंहः गर्जनं कुर्वन् अग्रे गत्वा सेवकानाम् उपरि अभ्यपतत् । ततः क्षणाभ्यन्तरे पञ्चषाः सेवकाः व्रणिताः सन्तः भूमौ पतितवन्तः । सिंहः एकं तु स्वदन्तैः सुदृढं गृहीतवान् आसीत् । सः सेवकः आत्मरक्षणार्थं प्रयत्नं कुर्वन् आसीत् । एतत् घोरं दृश्यं दृष्ट्वा अन्ये सेवकाः भीताः । भयेन कम्पमानाः ते पलायनम् आरब्धवन्तः ।

जीवदत्तः मन्त्रदण्डं दर्शयन् सिंहं पश्यन् – ''अये ! मृगराज ! पार्श्वभवने सुरङ्गमार्गः अस्ति । तत्रत्यं सोपानमार्गम् अनुसरन् इतः निर्गत्य अरण्यं प्राप्नोतु'' इति वदन् सुरङ्ग-मार्गदिशि सिंहं प्रेरयितुं प्रयत्नं कृतवान् । मन्त्रदण्डेन सकृत् तं प्रहृतवान् च ।

एतस्मात् सिंहस्य कोपः प्रवृद्धः । सः जीवदत्तस्य दिशि परिवृत्य पृष्ठपादाभ्यां तिष्ठन् अग्रिमपादौ उन्नीय आक्रमणार्थं प्रयत्नम् अकरोत् । तावता जीवदत्तः स्वस्य मन्त्रदण्डं तस्य उदरभागे स्थापयित्वा बलात् तं दूरे क्षिप्तवान् । एतस्मात् सिंहः भूमौ पतितः सन् लुण्ठन् प्रकोष्ठात् बहिः अगच्छत् ।

भित्तिखण्डस्य उपरि स्थित्वा एतत्सर्वं

पश्यन्तः स्थिताः उपासिकायाः सेवकाः आश्चर्यचकिताः । सिंहेन सह अपि निर्भयं युद्धं कुर्वन्तं जीवदत्तं दृष्ट्वा ते आश्चर्येण मूकाः जाताः । तेषु एकः हस्तौ योजयित्वा नमस्कारं कुर्वन् जीवदत्तम् अवदत् – ''मान्त्रिक-शिरोमणे ! असामान्यशक्तिशाली भवान् । किमर्थं भवता उपासिका न संहरणीया ? एतस्य शिथिलनगरस्य चक्रवर्तित्वं कुतो वा न प्राप्तव्यम् ? यदि भवान् एतस्य प्रदेशस्य स्वामी स्यात् तर्हि वयं सर्वे भवतः शिष्यत्वम् अङ्गीकृत्य आज्ञाधारकाः अनुयायिनः भविष्यामः'' इति ।



एतत् श्रुत्वा पार्श्वस्थः कोपेन तम् अतर्जयत् – ''अये गुरुद्रोहिन् ! किम् एतत् उच्यते भवता ?'' इति । केचन तस्य वादं समर्थितवन्तः । अपरे विरोधं कृतवन्तः । अतः तेषां मध्ये कलहः एव उत्पन्नः । परस्परं प्रहरन्तः ते भित्तिखण्डात् अन्यान् पातयन्तः स्वयम् अपि पतितवन्तः । तत्रापि तेषां कलहः अनुवृत्तः । एतत् दृष्ट्वा सिंहः तेषां दिशि पदम् अस्थापयत् ।

तदा जीवदत्तः मन्त्रदण्डम् उन्नीय सिंहं तर्जयन् अवदत् – ''अये ! किम् अस्थाने प्रवेशेन ? भवान् सोपानमार्गेण इतः बहिः गच्छतु ।... उपासिकायाः शिष्याः परस्पर-कलहेन स्वस्य नाशं स्वयं चिन्तयन्तः सन्ति । तत्र भवतः प्रवेशः न आवश्यकः । अरण्यं गच्छन् स्वप्राणान् रक्षतु । गच्छतु इतः'' इति ।

सिंहः जीवदत्तस्य आदेशं पालयन् ततः निर्गतवान् । खड्गवर्मा मौनेन तिष्ठन् एतत्सर्वं पश्यन् आसीत् । इदानीं सः अवदत् – ''जीवदत्त ! इदानीम् अत्र किं करणीयम् अवशिष्टम् ? उपासिकायाः अनुयायिनः तु परस्परकलहेन स्वनाशं स्वयं चिन्तयन्तः दृश्यन्ते । इदानीम् अत्र अस्माकं निरोद्धा अपि कोऽपि नास्ति । अतः वयम् अपि अरण्यं गच्छाम'' इति ।

''अस्तु तावत् । तथैव करवाम । सिंहः येन मार्गेण गतः तेनैव मार्गेण निर्गच्छाम । किन्तु मम तु स्पष्टता नास्ति यत् यत्र वयं एतत् नगरं प्रविष्टवन्तः स च प्रदेशः झटिति प्राप्येत वा न वा इति'' इति वदन् जीवदत्तः अग्रे पदानि स्थापितवान् ।

अत्रान्तरे उपासिकायाः कश्चन सेवकः धावन् गत्वा प्रवृत्तं सर्वं निवेदितवान् । ''जीवदत्तखड्गवर्माणौ बन्धनात् मुक्तौ स्तः, सिंहः कांश्चन सेवकान् व्रणितान् अकरोत्,



अवशिष्टाः सर्वे परस्परकलहे निरताः सन्ति'' इति तया ज्ञातम् ।

एतत् ज्ञात्वा सा शूलम् उन्नीय क्रोधमिश्रितस्वरेण – ''महाभूत ! किम् एतत् प्रवर्तते ! मया प्रकोष्ठे बन्धीकृतौ तौ कथं ततः विमोचनं प्राप्तवन्तौ ? मम शिष्यान् व्रणितान् कुर्वन्तौ तौ अधमौ युद्धम् उद्घोषितवन्तौ इव ! मम शक्तिशालितायाः अपमाननं क्रियते ताभ्याम् । एतावत् धार्ष्ट्यं कथं तयोः ? अहम् एतत् अवमाननं न सहे । अहं तौ निश्चयेन संहरिष्यामि'' इति उक्त्वा अनुयायिनः उद्दिश्य – ''अये भीरवः ! गत्वा तौ मानवकीटौ अत्र आनयन्तु अविलम्बेन'' इति आज्ञापितवती ।

जटामयपिशाच्याः, मान्त्रिकस्य, सिंहस्य च का गतिः जाता इति सः सेवकः प्रत्यक्षं दृष्टवान् आसीत् । अतः सः भयेन कम्पमानः एव अवदत् – ''देवि ! महाशक्तिशालिनि ! तौ मानवौ न सामान्यौ । तौ महाशक्तिमन्तौ, साहसिनौ, मन्त्रशक्तिसम्पन्नौ च । तौ मान्त्रिकं, जटामयराक्षसीं च....''

तस्य वचनं मध्ये एव खण्डयन्ती उपासिका हस्तस्थं शूलं तस्य पुरतः गृह्णती उक्तवती – ''अये भीरो ! अलम् अधिककथनेन । किमपि मा वदतु । अहम् इदानीम् एव तौ ग्रहीष्यामि, महाभूताय बलिरूपेण अर्पयिष्यामि च'' इति । तस्याः कोपमिश्रितस्वरेण युक्तं वचनं श्रुत्वा सर्वे मौनम् आश्रितवन्तः । भयम् अनुभवन्तः एव ते ततः निर्गन्तुं पदानि स्थापितवन्तः ।

खड्गवर्मजीवदत्तौ शिथिलभवनसमूहस्य अपरभागं प्राप्य अरण्यं प्रति गमनाय मार्गम् अन्विष्यन्तौ स्थितवन्तौ । येन सुरङ्गमार्गेण तौ आगतौ स च न प्राप्तः एव ।

''जीवदत्त ! वयम् उपासिकाभवनतः सुदूरम् आगताः उत न इति न ज्ञायते । वयं कुत्र स्मः ? सः सिंहः क्व गतः स्यात् ? किं सः अरण्यं गतः स्यात् ?'' इति पृष्टवान् खड्गवर्मा ।

''सोऽपि आवाम् इव मार्गभ्रष्टः सन् इतस्ततः अटन् अस्ति । अनतिदूरे एव तस्य गर्जनं तदा तदा श्रूयते खलु ?'' इति वदन् जीवदत्तः शिथिलभवनस्य कञ्चित् प्रकोष्ठं प्रविश्य अवदत् – ''एते दुष्टाः यात्रिकान् लुण्ठयन्तः कियत् धान्यं सङ्गृहीतवन्तः इति पश्यतु । अहो, धान्यानां महाराशिः एव दृश्यते अत्र !'' इति ।

तत्र धान्यगोणीनां राशिः एव आसीत् । काश्चन धान्यगोण्यः भग्नाः आसन् । ताभ्यः धान्यानि पतितानि दृश्यन्ते स्म ।

खड्गवर्मा आश्चर्यं प्रकटयन् अवदत् - ''जटामयीं राक्षसीं दर्शयन्तः एते जनेषु भयम् उत्पादयन्ति । ततः धान्यादिकं लुण्ठयन्ति च'' इति ।

''अत्र धान्यस्य एकोऽपि कणः यथा न अवशिष्येत तथा कर्तुं कोऽपि उपायः चिन्तनीयः । बुभुक्षया पीडिताः सन्तः उपासिकाजनाः एतेभ्यः शिथिलभवनेभ्यः यथा बहिः आगच्छेयुः तथा करणीयम् । तदा एते शोचनीयाम् अवस्थां प्राप्नुयुः'' इति वदन् उपायस्य चिन्तने प्रवृत्तः अभवत् जीवदत्तः ।

''मित्र ! आश्चर्यं नाम आवयोः उभयोः अपि मनसि समानः विचारः प्रवर्तते'' इति वदन् खड्गवर्मा कमपि उपायं विचिन्त्य स्वकोषतः घर्षकशिलां निष्कास्य अग्निम् उत्पादितवान् । ततः तं धान्यगोणीनाम् उपरि क्षिप्तवान् च ।

धान्यगोणीषु अग्निः लग्नः । क्रमेण अग्निः सर्वत्र प्रसृतः । धान्यगोण्यः एकैकशः दग्धाः जाताः । तावता पार्श्वप्रकोष्ठतः कोऽपि ध्वनिः श्रुतः ।

''खड्गवर्मन् ! पार्श्वप्रकोष्ठे कोऽपि अस्ति । तस्य द्वारं च पिहितम् अस्ति'' इति वदन् जीवदत्तः तस्य प्रकोष्ठस्य द्वारम् उद्घाटयितुं प्रयत्नं कृतवान् ।

तदा खड्गवर्मा हसन् उक्तवान् - ''रक्षणे त्वरावता भवता द्वारस्य कीलनम् अपि न लक्षितम् एव । आदौ मन्त्रदण्डेन तालं भञ्जयतु'' इति । जीवदत्तः मन्त्रदण्डेन तालं भञ्जितवान् । ततः खड्गवर्मा बलात् द्वारस्य नोदनं कृतवान् ।

तस्मिन् प्रकोष्ठे विशेषान्धकारः तु न आसीत् । उपरिष्टात् गवाक्षतः सामान्यः प्रकाशः आगच्छति स्म । तस्मिन् प्रकाशे ताभ्यां दृष्टं यत् निगडैः बद्धः कश्चन वृद्धः तत्र अस्ति इति । सः वृद्धः आजानुबाहुः आसीत्, किन्तु नितरां दुर्बलः जातः आसीत् । तस्य दीर्घाणि श्वेतश्मश्रूणि वायुकारणतः कम्पन्ते स्म ।

- *(अनुवर्तते)*



**महासंस्कृत्याः स्थूलदर्शनम्**
**प्रतियुगं सत्यान्वेषणार्थं कृताः विशेषयत्नाः**

# १५. वचनपालनम्



पितामहेन श्रावितासु कथासु अनेकाः सन्दीपस्य चमेल्याः च मित्रैः श्रुताः न आसन् । यदा सर्वे बालाः 'कथां वदतु' इति अनुरोधं कृतवन्तः तदा देवनाथवर्यः पौत्रौ अवदत् - ''मया श्राविताः कथाः मित्रेभ्यः श्रावयताम् । यदि भवन्तौ सफलौ भवतः तर्हि इतोऽप्यधिकाः कथाः श्रावयिष्यामि'' इति ।

द्वौ अपि पितामहस्य परीक्षायां सफलौ जातौ । चमेलीसन्दीपौ आत्मना श्रुताः कथाः समीचीनतया श्रावितवन्तौ । एतत् दृष्ट्वा अत्यन्तं सन्तुष्टः देवनाथः अवदत् - ''अहम् अद्य कस्यचित् महाराजस्य कथां श्रावयामि, येन महत्यः परीक्षाः सम्मुखीकरणीयाः अभवन्'' इति ।

सः रविवासरः । देवनाथवर्यः श्रोतृरूपेण उपस्थितानां बालानां गणं स्वीकृत्य उद्यानस्य दिशि प्रस्थितवान् । ते सर्वे स्वच्छं स्थलं चित्वा विशालस्य अश्वत्थवृक्षस्य अधः च्छायायाम् उपविष्टवन्तः ।

''प्राचीनकथाकाराणां स्थानम् अपि एतादृशम् एव भवति स्म'' इति वदन् कथाम् आरब्धवान् देवनाथः -

''भवन्तः त्रिशङ्कुमहाराजस्य कथां श्रुतवन्तः सन्ति । अहम् इदानीं तस्य पुत्रस्य हरिश्चन्द्रस्य कथां श्रावयामि । उभयोः अपि जीवने विश्वामित्रस्य पात्रं महत्त्वम् आवहति । किन्तु भेदः नाम - यः विश्वामित्रः त्रिशङ्कोः विषये अत्यन्तं दयालुः आसीत्, सः एव हरिश्चन्द्रविषये निर्दयं व्यवहारं कृतवान् ।

तदानीन्तनी घटना एषा, यदा च वसिष्ठस्य विषये विश्वामित्रेण अधिकं न ज्ञातम् आसीत् । विश्वामित्रः परिश्रमेण शक्तिं प्राप्य अपि स्वस्य एकं दौर्बल्यं जेतुं न शक्तः । तत् दौर्बल्यं नाम वसिष्ठस्य विषये शत्रुता । वसिष्ठविषयिकी विश्वामित्रस्य शत्रुता एव हरिश्चन्द्रस्य जीवने कष्टस्य कारणम् अभवत् ।

एकदा देवानां महापुरुषाणां च सभायां वसिष्ठेन विश्वामित्रात् अपि अधिकं सम्माननं प्राप्तम् । तस्य सम्माननानन्तरमेव अयोध्यायाः

# गौरव-गाथा





राजा हरिश्चन्द्रः कुलगुरोः वसिष्ठस्य द्वारा महान्तं यागं कारितवान् । तस्य यागस्य नाम - राजसूययागः इति । यः राजा सत्यस्य विषये दृढनिश्चयः भवति, यः दत्तं वचनं कदापि न विस्मरति तादृशः एव एतं यागं कर्तुम् अर्हति स्म । यागस्य फलं यागस्य कर्त्रा मार्गदर्शकेन च समानरूपेण प्राप्यते स्म ।

विश्वामित्रः यागस्य वार्तां श्रुत्वा आश्चर्यं प्रकटयन् - ''किं हरिश्चन्द्रः तादृशः महा-सत्यवादी ?'' इति अवदत् । अतः सः हरिश्चन्द्रस्य परीक्षां कर्तुम् इष्टवान् ।

किन्तु विश्वामित्रः अपि न जानाति स्म यत् हरिश्चन्द्रस्य परीक्षा कथं करणीया इति । अतः यदा राजा हरिश्चन्द्रः एकस्यां परीक्षायाम् उत्तीर्णः भवति तदा अपरां परीक्षाम् आयोजयति स्म विश्वामित्रः । तस्य विवरणम् एवम् अस्ति -

विश्वामित्रः कञ्चित् राक्षसं वराहरूपेण परिवर्त्य हरिश्चन्द्रस्य उपवनम् उध्वस्तं कर्तुम् आदिष्टवान् । वराहः तथैव कृतवान् । सः वराहः अत्यन्तं शक्तिमान् आसीत् इत्यतः राज्ञः सैनिकाः वराहस्य प्रेषणे मारणे वा असमर्थाः अभवन् । राजा एतं विषयं ज्ञातवान् । सः कञ्चित् अश्वम् आरुह्य वराहम् अनुसृतवान् । वराहः तदा तदा अग्रे धावन् झटिति राज्ञः उपरि आक्रमणं करोति स्म । पुनः कदाचित् निलीय स्थित्वा राज्ञः पृष्ठतः आगच्छति स्म ।

राजा आश्चर्यम् अनुभूतवान्, किन्तु वराहस्य अनुसरणं न त्यक्तवान् । वराहम् अनुसरन् सः घनम् अरण्यं प्रविष्टवान् । अन्ते वराहः कुत्रचित् अदृश्यः अभवत् ।

राजा श्रान्तः अभवत् । नदीजलं पीत्वा पिपासां निवार्य कस्याश्चित् शिलायाः उपरि शयानः विश्रान्तिम् अनुभवन् आसीत् सः । तावता कश्चन वृद्धः ब्राह्मणः तत्र आगत्य प्रीत्या सम्भाषणम् आरब्धवान् । अरण्ये कस्यचित् सज्जनस्य मेलनेन राजा प्रसन्नः आसीत् । राजा ब्राह्मणं स्वस्य नामादिकम् उक्त्वा - ''भवान् किम् इच्छति ?'' इति पृष्टवान् । ब्राह्मणः अवदत् - ''मम पुत्रः विवाहयोग्यः अस्ति । तस्य भाविजीवनं सुखमयं कर्तुं किञ्चित् धनम् आवश्यकम्'' इति ।

राजा ब्राह्मणस्य अपेक्षायाः पूरणार्थं तं सूचितवान् यत् श्वः भवान् राजगृहम् आगच्छतु इति । ''भवान् यत् इच्छति तत् दास्यामि'' इति वचनं दत्तवान् सः ।

सः ब्राह्मणः विश्वामित्रः एव, न तु अन्यः । सः छद्मवेषेण आगतः आसीत् । राज्ञः कथनम्



अनुसृत्य परेद्यवि सः राजसभां गतवान् । ब्राह्मणः पूर्णं राज्यं राजगृहं च अपेक्षितवान् । तेन चिन्तितम् आसीत् यत् राजा भीत्या वचनभ्रष्टः भवेत् इति । किन्तु राज्ञः मुखे चिन्तायाः लघुरेखा अपि न दृष्टा । सः उत्थाय - ''भवतः इच्छा पूर्णा भविष्यति'' इति ब्राह्मणम् अवदत् । एतस्मात् विश्वामित्रः राजानं परीक्षायाम् अनुत्तीर्णं कर्तुं न शक्तवान् ।

तथापि सः स्वस्य पराजयम् अङ्गीकर्तुं न सिद्धः । सः हरिश्चन्द्रम् अवदत् - ''राजन् ! भवान् स्वस्य वचनं निरूढवान् इत्येषः सन्तोषस्य विषयः एव । किन्तु सर्वविधपुण्यकार्यस्य अनन्तरं दक्षिणा दातव्या खलु भवति ?'' इति अवदत् । राज्ञा सर्वस्वं दानरूपेण दत्तम् आसीत् इत्यतः ब्राह्मणाय दक्षिणां दातुं न शक्यते स्म तेन । 'यावच्छक्यं तावच्छीघ्रं दक्षिणाम् अपि दास्यामि' इति उक्त्वा ब्राह्मणस्य अनुमतिं स्वीकृत्य ततः प्रस्थितवान् हरिश्चन्द्रः । तेन सह पत्नी चन्द्रमतिः, पुत्रः रोहिताश्वः च आस्ताम् । ते सर्वे वाराणसीं प्रति गतवन्तः ।

वाराणस्यां महता कष्टेन ते कञ्चित् आश्रमं प्राप्तवन्तः । तावता सः ब्राह्मणः आगत्य दक्षिणां याचितवान् । 'शीघ्रं दक्षिणां न ददाति चेत् शापं दास्यामि' इ॰ पि अवदत् सः । चन्द्रमतिः अग्रे आगत्य पतिम् अवदत् - ''मां कस्मैचित् विक्रीय यावत् लभ्यते तत् धनं ब्राह्मणाय ददातु'' इति । तथैव कृतं हरिश्चन्द्रेण । किन्तु यस्मै चन्द्रमत्याः विक्रयणं कृतम् आसीत् सः अपि विश्वामित्रः एव । किन्तु अन्यवेषेण आसीत् सः । सः रोहिताश्वम् अपि क्रीतवान् ।

एवं करणेन अपि दक्षिणाधनम् अपर्याप्तम् अभवत् । पत्नीं पुत्रं विक्रीय हरिश्चन्द्रः मार्गे भ्रमति स्म -''कः मां दासरूपेण क्रीणाति ?'' इति कथयन् ।

गङ्गायाः तीरे विद्यमानस्य दाहसंस्कारस्थलस्य स्वामी हरिश्चन्द्रं क्रीतवान् । एतेन विश्वामित्रस्य ऋणात् मुक्तः अभवत् हरिश्चन्द्रः ।

तदारभ्य दाहसंस्कारस्थलस्य रक्षणं, शवानां ज्वालनस्य व्यवस्था च हरिश्चन्द्रेण करणीया आसीत् । तत्र आगत्य ये दाहसंस्कारं कुर्वन्ति तेभ्यः शुल्कं स्वीकरणीयं भवति स्म । तत् शुल्कं स्वामिने समर्पणीयम् आसीत् । एतत्सर्वं कुर्वन् जीवनं यापयति स्म हरिश्चन्द्रः । अपरत्र, चन्द्रमतिः यत्र दासीरूपेण गतवती आसीत् तत्र तस्याः विषये उत्तमव्यवहारः न क्रियते स्म गृहजनैः । पत्युः वचनस्य पालनम् अभवत् इत्यतः स्वस्य कष्टस्य विषये कदापि खेदं न अनुभवति स्म सा ।

किन्तु एकदा प्रातः चन्द्रमत्या महत् कष्टं सम्मुखीकरणीयम् अभवत् । रोहिताश्वः सर्पदंशनेन मृतः अभवत् । किन्तु चन्द्रमत्यै पुत्रदर्शनार्थम् अनुमतिः न दत्ता । 'सर्वाणि

गृहकार्याणि समाप्य भवती रात्रौ पुत्रस्य शवं द्रष्टुं शक्नोति' इति गृहजनैः उक्तम् ।

अन्ततो गत्वा रात्रौ एव पुत्रस्य शवस्य दर्शनं कृतवती चन्द्रमतिः । सर्पः दष्टवान् आसीत् इत्यतः रोहिताश्वस्य शरीरं नीलं जातम् आसीत् । सा शवम् उन्नीय एकाकिनी एव श्मशानं प्रति प्रस्थितवती ।

अन्धकारमयी रात्रिः सा । वृष्टिः आरब्धा आसीत् । यदा विद्युत् प्रकाशते स्म तदा कष्टेन मार्गम् अन्विष्यन्ती कथञ्चित् श्मशानं प्राप्तवती सा । शवानां दाहसंस्कारार्थं शुल्कं दातव्यं भवति स्म । 'शुल्कं दातव्यम्' इति चन्द्रमतिः सूचिता । सूचकः न अन्यः, अपि तु तस्याः पतिः हरिश्चन्द्रः एव ।

यद्यपि चन्द्रमतिः स्वस्य असमर्थतां प्रकटय्य दयाभिक्षां याचितवती, तथापि हरिश्चन्द्रः नियमभङ्गं कर्तुं न इष्टवान् । ध्वनेः अभिज्ञान-कारणतः द्वौ अपि परस्परं परिचयं प्राप्तवन्तौ । पुत्रस्य मृत्योः विषये विलापम् आरब्धवन्तौ च ।

अन्ते ताभ्यां निश्चितं यत् पुत्रस्य चितायां स्वयमपि आत्मदहनेन जीवनं समापनीयम् इति ।

चिता सज्जीकृता । रोहिताश्वस्य शरीरं चितायाः उपरि स्थापितम् । तस्य शरीरस्य दाहसंस्कारोऽपि कृतः । चन्द्रमतिहरिश्चन्द्रौ चितां प्रवेष्टुं यावत् उद्युक्तौ तावता आकाशे गर्जनं श्रुतम् । क्षणं यावत् तौ आश्चर्यचकितौ जातौ । तयोः प्रियपुत्रः जीवितः सन् तत्र मन्दहासपूर्वकं स्थितवान् आसीत् । न केवलं तावत्, यः चन्द्रमतिं क्रीतवान् आसीत् सः अपि स्वस्य वास्तवरूपेण, तन्नाम विश्वामित्ररूपेण, प्रत्यक्षः अभवत् । सर्वे देवाः, श्मशानस्य स्वामी (न अन्यः, अपि तु धर्मः) च मिलित्वा हरिश्चन्द्रस्य स्तुतिम् आरब्धवन्तः ।

पुनश्च विश्वामित्रः अवगतवान् यत् वसिष्ठस्य निर्णयः सम्यक् आसीत् इति । वसिष्ठेन हरिश्चन्द्रस्य समर्थनं कृतम् आसीत् । विश्वामित्रः अपि राज्ञः श्रेष्ठताम् अङ्गीकृत्य राज्ञः समग्रं राज्यं प्रतिदातुम् अयोध्यायाः दिशि प्रस्थितवान् ।

पितामहः अवदत् - ''बालाः, एतस्याः कथायाः तात्पर्यम् अस्ति यत् सत्यशालिनः भवितुं महान् त्यागगुणः अपेक्षितः इति । शतशः वर्षेभ्यः महाराजस्य हरिश्चन्द्रस्य कथा मानवानां हृदयेषु गुञ्जन्ती अस्ति । यावत् सा लोके तिष्ठति तावत् मनुष्यः दुःखस्य कष्टस्य च सम्मुखीकरणं कृत्वा इतोऽप्यधिकतया पवित्रः शक्तिशाली च भवति'' इति ।





# योग्यः वरः कः ?

रामपुरीयभूस्वामिनः कार्यालये बलरामः कोषाधिकारी आसीत् । तस्य अद्वितीया पुत्री सुनन्दा । पत्न्याः मरणस्य अनन्तरं बलरामः पुत्रीं महता वात्सल्येन पोषितवान् आसीत् । यदा सा प्राप्तवयस्का जाता तदा सः तस्याः विवाहार्थं प्रयत्नम् आरब्धवान् । तस्य चिन्तनम् आसीत् यत् मम कार्यालये स्थिताय कस्मैचित् योग्याय युवकाय यदि पुत्री दीयेत तर्हि पुत्री मया सहैव तिष्ठेत् इति ।

कार्यालये नागराजः सुरेशः चेति उभौ तरुणौ तदधीनतया कार्यं कुरुतः स्म । उभौ अपि सुन्दरौ कार्यदक्षौ च । किन्तु तयोः स्वभावे महत् अन्तरम् आसीत् ।

नागराजः स्नेहशीलः । सर्वदा हसन् अन्यान् अपि हासयति स्म । किन्तु जनाः वदन्ति स्म यत् सः नाणकमात्रम् अपि न सञ्चिनोति, वेतनरूपेण प्राप्तं सर्वं धनं व्ययीकरोति इति ।

किन्तु सुरेशस्य स्वभावः एतस्मात् भिन्नः । विचिन्त्य वार्तालापं करोति स्म सः । व्ययविषये अपि तथैव । अतः जनाः वदन्ति स्म यत् प्रभूतं धनं सम्पादितवान् सुरेशः भाविजीवनं सुखमयं कर्तुं धनस्य सञ्चयं कुर्वन् अस्ति इति । केचन तं महाकृपणं वदन्तः उपहसन्ति स्म ।

एकदा कार्यालयतः आगतः बलरामः पुत्र्याः पुरतः विवाहप्रस्तावम् उपस्थापयन् स्वस्य मनसि स्थितयोः उभयोः वरयोः स्वभावादिकं विस्तरेण निवेद्य - ''भूस्वामिनः गृहे जन्मदिनाचरणावसरे भवत्या तौ उभौ अपि दृष्टौ स्याताम् एव । तयोः कतरः भवत्यै रोचते इति वदतु भवती । अग्रे यत् करणीयं तत् अहं करिष्यामि''

'भामहः'

इति अवदत् ।

किञ्चित् विचिन्त्य सुनन्दा उक्तवती - ''अहं नागराजेन एव परिणीता भवितुम् इच्छामि'' इति ।

तदा बलरामः आश्चर्येण अवदत् - ''वत्से! किम् एतत् वदति भवती ? सः महाव्ययशीलः इति सर्वे वदन्ति । वेतनत्वेन प्राप्ते धने वराटिकामात्रम् अपि न सञ्चिनोति सः । एतादृशः किं पत्नीं सम्यक् पोषयेत् ? किं सः कुटुम्बनिर्वहणं समीचीनतया कुर्यात् ?'' इति ।

तदा सुनन्दा उक्तवती - ''इदानीं नागराजस्य उपदेष्टा कोऽपि नास्ति । अतः विना निग्रहं, धनं व्ययीकरोति सः । यदि कोऽपि तं व्ययनिग्रहं बोधयेत् तर्हि निश्चयेन सः स्वव्यवहारं परिष्कुर्यात् । तम् अवलम्बितवन्तः सुखेन तिष्ठेयुः । किन्तु सुरेशः न एतादृशः । कृपणता तस्य स्वभावः । अतः करणीयं व्ययं कर्तुम् अपि न उत्सहते सः । अतः सः न सुखेन तिष्ठति, न वा तदवलम्बिनः सुखेन तिष्ठेयुः'' इति ।

''भवत्याः अयं निर्णयः उचितः इत्यत्र कः आधारः?'' इति पृष्टवान् बलरामः ।

''प्रमाणम् आवश्यकं चेत् परीक्षा आयोजनीया । परीक्षातः एव काकः कः, पिकश्च कः इति निर्णीतं भवति । अतः भवान् तयोः परीक्षार्थं कमपि मार्गं चिन्तयतु । यः परीक्षायाम् उत्तीर्णः भविष्यति तम् एव अहं परिणेष्यामि'' इति उक्तवती सुनन्दा ।

अनन्तरदिने कार्यालये चिन्ताक्रान्ततया



उपविष्टं बलरामं पृष्टवान् नागराजः - ''श्रीमन् ! आदिनं भवतः मुखं म्लानम् आसीत् । व्यवहारे उत्साहः एव न आसीत् । इतः पूर्वं कदापि एवं न व्यवहृतं भवता । का चिन्ता भवतः ? किं कष्टं बाधते ?'' इति । बलरामः उद्देशपूर्वकम् एवम् अभिनयन् अस्ति इति सः न जानाति स्म ।

बलरामः चिन्तामिश्रितस्वरेण उक्तवान् - ''किं वदेयं नागराज ! मम पुत्र्याः विवाहः निश्चितप्रायः । किन्तु वरपक्षीयाः दशसहस्रं रूप्यकाणि वरदक्षिणारूपेण अपेक्षन्ते । मम समीपे तावत् धनं नास्ति । एतं सम्बन्धं परित्यक्तुं मम इच्छा नास्ति ! किं करणीयम् इत्येव न ज्ञायते'' इति ।

बलरामस्य समस्यां ज्ञात्वा नागराजः उक्तवान् - ''भवतः पुत्री तु सुन्दरी,

गुणवती, बुद्धिमती च । तादृश्याः प्राप्तिः एव वस्तुतः महतः सौभाग्यस्य विषयः । एवं स्थिते वरपक्षीयाः वरदक्षिणारूपेण प्रभूतं धनम् इच्छन्ति इति तु आश्चर्याय । तत् आस्तां तावत्, भवते दशसहस्रं रूप्यकाणि खलु आवश्यकानि ? दिन-चतुष्टयाभ्यन्तरे अहम् आनीय दास्यामि । अतः अलं चिन्तया'' इति ।

''यावत् वेतनं प्राप्यते तावत् समग्रम् अपि व्ययीकुर्वन् भवान् सुमहत् धनं कुतः आनयेत् ?'' इति पृष्टवान् बलरामः ।

तदा नागराजः हसन् अवदत् - ''धनिकाः बहवः मम मित्राणि सन्ति । मया तेषां साहाय्यं कृतं बहुधा । किं ते एकवारं मम साहाय्यं न कुर्युः ?'' इति । तस्य कथनम् आत्मविश्वासपूर्णम् आसीत् ।

अनन्तरं बलरामः सुरेशेन मिलितः । धनस्य आवश्यकतां निवेद्य सः अवदत् - ''मित्र ! भवान् मितव्ययी इति अहं जानामि । भवान् निश्चयेन साहाय्यं करिष्यति इत्यत्र अस्ति मम दृढः विश्वासः । दशसहस्रं रूप्यकाणि ददातु भवान् कृपया । मासाभ्यन्तरे तत् धनं प्रत्यर्पयिष्यामि । यथायोग्यं वृद्धिं च दास्यामि'' इति ।

एतत् श्रुतवतः सुरेशस्य मुखं विवर्णं जातम् । सः बलरामम् अवदत् - ''श्रीमन् ! क्षन्तव्यः अहम् । ऋणदानं सर्वथा न इच्छामि अहम् । अन्यच्च, सङ्गृहीतं धनम् अस्ति चेदेव वरदक्षिणादिकं चिन्तनीयम् । विवाहं मासत्रयानन्तरं निर्वर्तयतु भवान् । तदभ्यन्तरे तावत् धनं सम्पादयतु । अथवा मासत्रयानन्तरं तावत् धनं मह्यम् एव ददातु । अहं भवतः पुत्रीं परिणेष्यामि'' इति ।

बलरामः किमपि अवदन् ततः निर्गतवान् । गृहं प्रत्यागत्य पुत्रीं प्रवृत्तं सर्वम् उक्तवान् च । तदा सुनन्दा उक्तवती - ''तात ! इदानीं ज्ञातं खलु - काचमणिः कः, सुवर्णं किम् इति ? बाह्यव्यवहारः अन्यः, अन्तरङ्गम् अन्यत् एव'' इति ।

'' युक्तम् उक्तं भवत्या । महाबुद्धिमती भवती । मया भवत्याः जयः अङ्गीक्रियते'' इति साभिमानम् उक्तवान् बलरामः । ततः मासाभ्यन्तरे सुनन्दा-नागराजयोः विवाहः सवैभवं सम्पन्नः ।





# स्पृष्टं सुवर्णं जातम्

कश्चित् वणिक् आसीत् । तस्य एकः पुत्रः आसीत् । वणिजः पत्नी दिवङ्गता आसीत् । अतः वणिक् स्वस्य एकमात्रं पुत्रम् अत्यन्तं प्रीत्या पालितवान् आसीत् । द्विगुणितेन परिश्रमेण पुत्रस्य निमित्तम् एव धनं सम्पादयति स्म सः । पुत्रस्य सन्तोषार्थम् उदारतया व्ययीकरोति स्म च ।

कदाचित् वणिक् अस्वस्थः अभवत् । 'मृत्युः सन्निहितः' इति ज्ञात्वा पुत्रम् आहूय सः – ''पुत्र, जीवनस्य अन्तिमसमये अहं भवतः आशीर्वादं कुर्वन् अस्मि । भवान् यत् स्पृशति तत् सुवर्णमयं भवतु'' इति वदन् एव प्राणान् अत्यजत् ।

वणिजः पुत्रः पितुः मरणेन किञ्चित्कालं बहु दुःखितः अभवत् । क्रमशः यदा दुःखं न्यूनं जातं, तदा तेन पितुः वाणिज्यम् अनुवर्तितम् । अल्पे एव काले तेन सर्वाणि वाणिज्यरहस्यानि अवगतानि । अतः सः वाणिज्यनिपुणः जातः । भाग्येन अपि तस्य साहाय्यं कृतम् । सुवर्णवृष्टिः जाता इव सः सर्वत्र लाभं प्राप्नुवन् आसीत् ।

कानिचन दिनानि यावत् सः बहु धनम् अर्जितवान् । अनन्तरं सः पितुः अन्तिमम् आशीर्वादं स्मृतवान् । सः चिन्तितवान् यत् पितुः आशीर्वादकारणतः एव मया एतावत् धनं प्राप्तम् इति ।

'एवंविधं भाग्यस्य विकसनम् आपत्तिजनकं भवितुम् अर्हति अपि । अतः अस्मिन् विषये मया जागरूकतया भवितव्यम् । यत्र मूल्यम् अधिकं तत्र वस्तूनि क्रीत्वा तानि तादृशे स्थले विक्रेतव्यानि यत्र तेषां मूल्यं न्यूनं स्यात् । तदा एव मम भाग्यं परीक्षितं स्यात्' इति सः चिन्तितवान् । अतः सः यत्र खर्जूराणि अधिकमूल्येन लभ्यन्ते तत्र क्रीत्वा तेषां विक्रयणार्थं मिश्रदेशं गतवान् । मिश्रदेशे सर्वदा खर्जूराणि अत्यन्तं न्यूनमूल्येन विक्रीयन्ते स्म ।

मिश्रराजः ज्ञातवान् यत् कश्चित् युवकः

*'मिश्रदेशीया जनपदकथा'*

वणिक् अन्यस्मात् स्थानात् खर्जूराणि आनीय अत्र विक्रीणीते इति । अतः सः सेवकान् अवदत् - ''कः सः विचित्रः वणिक् ? तम् अहं द्रष्टुम् इच्छामि । तम् अत्र आनयन्तु तावत्'' इति । सेवकाः तं युवकं राज्ञः समीपम् आनीतवन्तः ।

राजा तं युवकम् उद्दिश्य - ''भवान् किमर्थं मूर्खः इव व्यवहरन् हानिम् अनुभवन् अस्ति ?'' इति पृष्टवान् ।

''महाराज, पितुः आशीर्वादकारणतः मया स्पृष्टं सर्वं सुवर्णायते । भाग्यस्य कृपा अधिका भवति चेत् अपि समीचीनं न खलु । अतः अहं प्रयत्नेन भाग्यागमनस्य मार्गम् अवरोधयन् अस्मि'' इति विनयेन उक्तवान् सः युवकः ।

तदा राजा पृष्टवान् - ''पित्रा कीदृशः आशीर्वादः दत्तः आसीत् ?'' इति ।

तदा युवकः - ''मया स्पृष्टा मृत्तिका अपि एवं सुवर्णं भवति'' इति वदन् भूमितः मुष्टिमितां मृत्तिकां स्वीकृत्य प्रदर्श्य अधः पातितवान् । मृत्तिकायाः पतनानन्तरं तस्य हस्ते किमपि अवशिष्टम् । ''किम् तत् ?'' इति आश्चर्येण पृष्टवान् राजा ।

''काचित् मुद्रिका इति भाति'' इति वदन् युवकः तत् राज्ञे समर्पितवान् । सा आसीत् राजमुद्रिका । सा कदा आरभ्य स्वस्य वंशे आसीत् इति न जानाति स्म राजा अपि । वर्षात् प्राक् सा कुत्रचित् नष्टा आसीत् । तस्याः मुद्रिकायाः अन्वेषणार्थं बहुविधप्रयत्नाः कृताः आसन् राज्ञा । बहु धनमपि व्ययितम् आसीत् तेन । किन्तु सा मुद्रिका न प्राप्ता एव । अतः मुद्रिकां दृष्ट्वा राजा नितरां सन्तुष्टः ।

आश्चर्यचकितः सन् सः युवकम् उद्दिश्य उक्तवान् - ''भोः, निश्चयेन भवतः पितुः आशीर्वादः अपूर्वः अस्ति । भवतः भाग्यरेखां भगवान् अपि परिवर्तयितुं न शक्नोति । भवादृशः भाग्यवान् जनः यदि राजा भवेत् तर्हि देशस्य भाग्यम् अपि निश्चयेन विकसेत् । अतः कृपया भवान् मम पुत्रीं परिणयतु'' इति प्रार्थितवान् ।

युवकाय एषः प्रस्तावः अरोचत । अतः सः राज्ञः प्रस्तावं ससन्तोषम् अङ्गीकृतवान् । ततः महता वैभवेन तयोः विवाहः प्रवृत्तः । पश्चात् सः एव युवकः मिश्रदेशस्य राजा अभवत् ।



# स्वच्छः परिसरः

'अहो, प्राप्तः गृहपरिसरः । गृहसमीपे स्थिते उद्याने विहारार्थम् अवसरः सन्निहितः अस्ति' इति चिन्तयन् एव सिद्धार्थः नवदेहल्याम् इन्दिरागान्धि-स्मारके अन्ताराष्ट्रियविमानस्थानके पदं स्थापितवान् ।

अमेरिकादेशे उत्तरकरोलिना-विश्वविद्यालये पञ्च वर्षाणि यावत् उषित्वा स्वगृहं प्रत्यागच्छन् अस्ति सिद्धार्थः । तं स्वागतीकर्तुं मातापितरौ विमानस्थानकम् आगतौ स्तः । 'पादपदगञ्ज'प्रदेशे तौ वसतः आ बहोः कालतः । सिद्धार्थः चिन्तयति - 'कदा वा गृहं प्राप्नुयाम् ? यस्मिन् रमणीये परिसरे बाल्यं यापितं तं परिसरं कदा वा पश्येयम् ?' इति ।

किन्तु गृहस्य पुरतः कार्यानात् यदा सः अवतीर्णः तदा महती निराशता तम् अबाधत । यादृशः परिसरः तस्य स्मृतिपथे आसीत् तादृशः न दृश्यते स्म तत्र । समग्रः परिसरः परिवर्तितः दृश्यते स्म । सुन्दरः 'बाबुल्'वृक्षः न दृश्यते अद्य । सर्वदा पुष्पवृष्टिं कुर्वन् गुल्मोहर्वृक्षः अपि न दृश्यते ।। सा मार्गस्य स्वच्छता अपि न दृश्यते । इदानीं तत्र तत्र दृश्यते विकीर्णः अवकरराशिः । मक्षिका-मशकादयः सैन्यरूपेण सञ्चरन्ति निर्बाधम् ।

प्रतिवेशिनी शर्मवर्यस्य पत्नी सिद्धार्थस्य आगमनम् अभिनन्द्य अवकरान् कण्डोलपार्श्वे एव क्षिप्त्वा निर्गता । एतेन सिद्धार्थः आश्चर्येण मूकः



जातः । एतादृशं दृश्यं तेन न निरीक्षितम् आसीत् ।

सर्वाणि भवनानि दृश्यन्ते स्म प्राचीनानि इव । मलिनं धूलिधूसरितं वस्त्रं धृतवान् पुरुषः इव... ।

गृहप्रवेशसमनन्तरम् एव सिद्धार्थः महतीं निराशतां प्राप्तवान् । यानि एतानि परिवर्तनानि दृश्यन्ते स्म तानि अनूह्यानि आसन् । तस्य स्मृतिपथे स्थितः, द्रष्टुम् इष्टः च गृहपरिसरः अन्यः एव आसीत् ।

सायङ्कालः यदा प्राप्तः तदा सिद्धार्थस्य लघु अस्वास्थ्यम् आरब्धम् । 'आक्षी... आक्षी..' इति क्षुवः आरब्धः । 'महती धूलिः !' इति स्वगतम् उक्तवान् सिद्धार्थः ।

एतत् दृष्ट्वा पिता उक्तवान् - ''किञ्चित् अभ्यासः भवति चेत् सर्वं सम्यक् भविष्यति'' इति ।

यदा माता परिवेष्टुम् उद्युक्ता तदा सिद्धार्थः तस्याः हस्ते चर्मापगमादिकं दृष्टवान् । तेन पृष्टा सा उक्तवती - ''एतादृशी चर्मरोगसमस्या देहल्यां बह्वीनां महिलानाम् अस्ति'' इति ।

रात्रौ महत् औष्ण्यम् अनुभवन् एव सिद्धार्थः शयनार्थं गतवान् । मध्यरात्रे सः जागरितः । मातापित्रोः प्रकोष्ठे दीपः ज्वलति स्म । सः तत्र गतः । तत्र पिता श्वासकासरोगेण पीडितः दृश्यते स्म । माता किमपि औषधं लेपयन्ती आसीत् ।

एतत्सर्वं सोढुं न शक्तवान् सिद्धार्थः । आत्मना कृतं निर्णयं भृशं निन्दितवान् मनसि एव ।

अनन्तरदिने प्रातः उपाहारसमये सः पितरम् उक्तवान् - ''तात ! अहं किञ्चित् वक्तुम् इच्छामि । अमेरिकादेशे एका तन्त्रांशसंस्था (Software Company) उद्योगार्थं मां निमन्त्रितवती आसीत् । अहं तत्र अनासक्तिं दर्शितवान् आसम् । इदानीं भाति यत् तस्य उद्योगस्य अङ्गीकारः एव वरम् इति । एतस्मिन् नरकप्राये प्रदेशे वासं कर्तुं न शक्नोमि अहम्'' इति ।

एतत् श्रुतवतोः सिद्धार्थस्य मातापित्रोः महान् आघातः । ताभ्यां चिन्तितम् आसीत् यत् एषः इतःपरं देहल्याम् एव वसन् वार्धक्ये आवयोः सहायकः भविष्यति इति । अतः तौ पुनः पुनः निवेदितवन्तौ - पुनरपि अमेरिकागमनं मास्तु इति । सिद्धार्थः तयोः खेदं जनयितुं न इच्छति, किन्तु एतस्मिन् कलुषिते परिसरे स्थातुम् अपि न शक्नोति ।

सः मातापितरौ अवदत् - ''अत्रत्यायाः स्थितेः परिवर्तनार्थं किमर्थं किमपि न क्रियते ? अस्माकं वसतिप्रदेशः नितरां मलिनः अस्ति । अवकर-कण्डोलपार्श्वे मक्षिकाणाम् एव साम्राज्यम् । ह्यः रात्रौ श्वासकासरोगः किमर्थम् अपीडयत् इति किं ज्ञायते ? अत्रत्यः परिसरः एव अत्र कारणम् ।''

तयोः मुखे दृष्टां शून्यतां दृष्ट्वा सः कथनम् अनुवर्तितवान् - ''कलुषितस्य वायोः सेवनतः श्वासकासरोगः प्राप्तः अस्ति भवता । पूर्वम् अत्र

**कलुषितः परिसरः**

*किं भवन्तः जानन्ति यत् नवदेहली परिसर-मालिन्ययुक्तेषु नगरेषु प्रपञ्चस्तरे चतुर्थे स्थाने अस्ति इति ?*





### विलक्षणवार्ता !!



**थायूल्याण्ड्देशस्य यन्त्रागारीयप्रदेशे परिसरः आम्लीयः अस्ति । अतः तद्देशीयः सार्वजनिक-स्वास्थ्य मन्त्रालयः कृषिकान् ज्ञापयति यत् वृष्टेः आरम्भस्य घण्टाचतुष्टयस्य अनन्तरम् एव वृष्टिजलस्य संग्रहः करणीयः, न तु ततः पूर्वम् इति ।**

अनेके वृक्षाः आसन्, इदानीं दृश्यन्ते छिन्नाः !! अतः वायुमालिन्यं प्रवृद्धम् । मातुः हस्ते यः चर्मरोगः दृश्यते तस्यापि कारणं परिसरमालिन्यम् एव । विविधपीडां प्राप्तवन्तः अपि जनाः शुद्धस्य वायोः, परिसरस्य च महत्त्वं न अवगच्छन्ति । परिसर-मालिन्यं सर्वप्राथम्येन निवारणीयम् अस्माभिः ।''

तस्य कथनम् अकिञ्चित्करम् एव जातम् । तस्य मातापितरौ शर्मवर्यस्य पत्न्याः व्यवहारम् उदाहरन्तौ पृष्टवन्तौ – ''एतादृशेषु सत्सु, वयं किं वा कर्तुं शक्नुयाम ?'' इति ।

परिस्थितेः परिवर्तनं सर्वथा न शक्यते इत्यत्र नास्ति विश्वासः सिद्धार्थस्य । सः एतस्मिन् गृहे स्थातुम् इच्छति स्म, न तु एतस्मिन् कलुषिते परिसरे । किमपि करणीयम् इति निश्चितं तेन । ''यदि मासाभ्यन्तरे अपि अहं किमपि कर्तुं न शक्ष्यामि तर्हि अमेरिकां प्रतिगमिष्यामि'' इति उक्तवान् सः ।

सायङ्काले गृहस्य पुरतः स्थिते रिक्ते निवेशने क्रीडतः कांश्चित् बालान् दृष्टवान् सः । ततः तस्य मनसि कश्चन उपायः स्फुरितः । सः अमेरिकातः आनीतान् कांश्चन चाकलेहान् स्वीकृत्य बालानां समीपं गत्वा तेभ्यः तान् दत्तवान् ।

''एते चाकलेहाः किम् अमेरिकातः एव आनीताः ?'' इति पृष्टवान् कश्चन बालकः ।

''आम्'' इति उक्तवान् सिद्धार्थः ।

''अमेरिका सुन्दरः कश्चन देशः खलु !'' इति उक्तवान् अपरः ।

''आम्, सुन्दरः सः'' – उत्तरितवान् सिद्धार्थः ।

''भवान् अमेरिकां प्रतिगन्तुम् इच्छति खलु ? भारते किम् अस्ति वैशिष्ट्यम् ?'' इति अवदत् श्यामः ।

''नाहम् अमेरिकां प्रतिगमिष्यामि । अहं स्रष्टुम् इच्छामि अमेरिकां भारते एव'' इति दृढस्वरेण उक्तवान् सिद्धार्थः ।

''कथम् एतत् शक्यते ?'' – आश्चर्येण पृष्टवान् अल्पवयस्कः चेतनः ।

''न कष्टकरं तत् । किन्तु तत् अहम् एकाकी कर्तुं न शक्नोमि । भवतां साहाय्यम् आवश्यकं तत्र'' इति अवदत् सिद्धार्थः ।

बालाः आश्चर्यचकिताः । 'बालाः वयं कथम् एतस्मिन् महति कार्ये सहायकाः भवितुम् अर्हाम ?'







इति चिन्तनं तेषाम् । सिद्धार्थः तेषां पुरतः योजनायाः स्थूलरूपं विवृतवान् । ते साहाय्यं प्रतिज्ञातवन्तः । ततः प्रतिदिनं सायं शालातः प्रत्यागत्य ते सिद्धार्थेन सह समालोचनं कुर्वन्तः योजनां सज्जीकृतवन्तः ।

तैः आदौ सस्यानि आनीय समग्रे उपनगरे आरोपितानि । जलसेचनव्यवस्था अपि तैः चिन्तिता । अल्पं धनं सङ्गृह्य ते सम्मार्जनादीनि स्वच्छतासाधनानि क्रीतवन्तः । ततः स्वच्छता आरब्धा तैः ।

मासत्रयाभ्यन्तरे स च वसतिप्रदेशः निर्मलः जातः । शर्मपत्नीसदृश्यः महिलाः यत्रकुत्रचित् अवकरस्य क्षेपणं स्थगितवत्यः । बालानां प्रयत्नं दृष्ट्वा प्रेरणां प्राप्तवत्यः काश्चन स्वगृहस्य पुरतः, अट्टे वा लघूद्यानं निर्मातुम् उद्युक्ताः जाताः ।

इदानीं सिद्धार्थः नितरां सन्तुष्टः अस्ति । पादपदगअप्रदेशे वासः इदानीं सह्यः सन्तोषकरः च जातः अस्ति । एकदा सः स्वस्य बालमित्राणि पृष्टवान् - ''भवन्तः विद्यालयं कथं गच्छन्ति ? किम् कार्यानेन एव गन्तव्यम् ? कुतो वा द्विचक्रिकायाः उपयोगः न करणीयः ? द्विचक्रिकाचालनं व्यायामाय, परिसरमालिन्य-निवारणाय च । अथवा कार्यानेन एव गन्तव्यम् चेदपि सर्वे कुतो वा एकस्मिन् एव कार्याने उपविश्य न गच्छेयुः ? तेन इन्धनतैलस्य सञ्चयः स्यात्, वायुमालिन्यम् अपि न्यूनं स्यात्'' इति ।

षट् मासाः अतीताः । सिद्धार्थेन अमेरिकां प्रति गमनविचारः सर्वथा परित्यक्तः अस्ति । नवदेहल्याम् एव तेन उत्तमः उद्योगः प्राप्तः अस्ति अपि । अतः सिद्धार्थस्य मातापितरौ सन्तुष्टौ स्तः । सोऽपि सन्तुष्टः अस्ति ।

तस्य गणः परिसरमालिन्यनिवारणार्थं सदा प्रयत्नं करोति । तैः स्ववसतिप्रदेशे प्लास्टिक्-स्यूतानाम् उपयोगः निषेधितः अस्ति । प्लास्टिक् कथं परिसरं नाशयति इति ते जनान् अवगमितवन्तः सन्ति । इदानीं यदि भवन्तः पादपदगअप्रदेशं गच्छेयुः तर्हि तत्र श्याम-चेतना-मीरा-तारादीन् पश्येयुः, ये च आपणतः वस्तूनाम् आनयनार्थं वस्त्रस्यूतस्य, गोणीस्यूतस्य वा उपयोगं कुर्वन्ति ।

**- जि. विद्या**

## नायं हासस्य विषयः....



# जीवनं पल्लवितं पुनः






लघुबालः विजयः यावच्छक्यं तावता वेगेन धावन् अस्ति । 'केनापि सह घट्टनं भवेत्' इत्यपि चिन्ता तं न बाधते स्म । सः एकं बालशुनकम् उन्नीय धावन् आसीत् । यदा सः तस्य बाल-शुनकस्य मणेः निश्चलं शरीरं पश्यति तदा तस्य नेत्राभ्याम् अश्रूणि प्रवहन्ति स्म । सः दुःखेन 'मम एतस्य प्रियमित्रस्य दुरवस्थायाः कारणं किं स्यात् ?' इति चिन्तयन् आसीत् ।

विजयः त्वरया पशुचिकित्सालयं प्राप्य चिकित्सकस्य सुन्दरस्य पुरतः स्थित्वा – ''महोदय, मम मणिः एषः । वयं क्रीडन्तः आस्म । तदा अकस्मात् एषः भूमौ अपतत् । एतस्य मुखतः लालारसः स्रवति । कृपया एतं शीघ्रं स्वस्थं करोतु'' इति वदन् रोदनम् आरब्धवान् ।

तदा वैद्यः – ''चिन्तां न करोतु वत्स ! विषस्य कारणतः एवं जातम् अस्ति इति भाति । एतस्मै खादितुं किं दत्तम् ? किं पीतवान् एषः ?'' इति पृच्छन् उत्पीठिकायाः उपरि शायितस्य बाल-शुनकस्य परीक्षणम् आरब्धवान् ।

विजयः खेदम् आश्चर्यं च प्रकटयन् – ''किं विषम् ! मम प्रियमणये कः विषं दातुं शक्नोति ? महोदय, एषः तु सर्वेषां प्रियः आसीत् । वयं नद्याः तीरे क्रीडन्तः आस्म । तदा एतेन नदीजलं पीतं, तावदेव'' इति अकथयत् ।



तदा वैद्यः - 'हूँ, एवं तर्हि नदीजलमेव अत्र कारणम् ! मया मम मित्राणां जागरूकतावचनानि श्रोतव्यानि आसन्' इति स्वगतम् उक्तवान् ।

मणये वैद्यः कतिचन विषापहारीणि औषधानि सूचितवान् । किन्तु तैः कोऽपि लाभः न अभवत् । मणिम् उन्नीय विजयः उच्चैः रोदनम् आरब्धवान् ।

चिकित्सकः सुन्दरः अत्यन्तं चिन्तितः अभवत् । नद्याः दूषितजलेन भीषणपरिणामः भवेत् इति सः चिन्ताक्रान्तः अभवत् । सः ग्रामजनेभ्यः जागरूकतावचनानि सूचयितुम् इष्टवान् । किन्तु तथा करणेन महान् विवादः समुत्पन्नः भवेत् इति विचिन्त्य मौनम् आश्रितवान् ।



दशभ्यः वर्षेभ्यः पूर्वं ग्रामे यदा सिद्धवस्त्राणाम् उत्पादकयन्त्रागारस्य आरम्भविचारः प्रचलति स्म तदा चिकित्सकेन सुन्दरेण विरोधः प्रकटितः आसीत् । सुन्दरः कैश्चित् युवकैः सह परिसररक्षकसङ्घस्य स्थापनं कृतवान् । सः युवकगणः ग्रामजनानां शिक्षणार्थं प्रयतते स्म । ते यन्त्रागारकारणतः भविष्यतः दुष्परिणामान्, सम्मुखीकरणीयाः समस्याः च जनान् बोधयन्ति स्म । किन्तु केनाऽपि एषा समस्या गम्भीरतया न परिगणिता एव । युवकानां ध्वनिः ग्रामजनानां निरुत्साहकारणतः क्षीणः अभवत् । यन्त्रागारस्य स्वामी स्थानीयः राजकीयप्रभावयुतः च आसीत् । तम् उद्दिश्य केनाऽपि अङ्गुली न प्रदर्श्यते स्म ।

यदा ग्रामजनानां कृषिभूमिं स्वायत्तीकृत्य यन्त्रागारस्य कार्यम् आरब्धं तदा ग्रामजनाः अपि मौनसम्मतिं प्रकटितवन्तः । एतेन सुन्दरः नितराम् आश्चर्यचकितः अभवत् । परिहाररूपेण यत् प्रभूतं धनं दत्तं तेनैव ग्रामजनाः सन्तुष्टाः अभवन् । केचन तु कृषिकार्यं परित्यज्य यन्त्रागारे कार्यकरणम् आरब्धवन्तः । यन्त्रागारेण सह कर्मकराणां गृहाणि, तान्त्रिकसहायकानां, अधिकारिवर्गीयाणां च गृहाणि निर्मितानि । वृक्षाः पातिताः । कृषिभूमिः वासस्थानरूपेण परिवर्तिता । ग्रामस्य ग्रामत्वं नष्टम् । तत्र महत् परिवर्तनं जातम् ।

नदीतीरं पूर्वं विहारस्य स्थलम् आसीत् ।



## नदी दग्धा !!



नदीनाम् अग्निस्पर्शः ! विचित्रम् इति भाति खलु । किन्तु सत्यम् एतत् । १९६९ तमे वर्षे क्लेव्ल्याण्ड्प्रदेशस्य ओहियो इत्यत्र प्रवहन्त्याः 'कूहोगा 'नद्याः अग्निस्पर्शः अभवत् । तत् नगरम् अमेरिका-संयुक्तसंस्थानस्य प्रमुखम् औद्यमिकनगरम् आसीत् । यन्त्रागारैः प्रदूषितं रासायनिकजलं नद्यां योजितम् आसीत् । किन्तु केनापि सः दोषः न लक्षितः । अतः एव प्रदूषितायाः नद्याः अग्निदुरन्तपीडा सम्मुखीकरणीया अभवत् ।

पक्षिणां मधुरकण्ठस्य कूजनेन, चिक्रोडानां सञ्चारेण च तत्र आह्लादकरं वातावरणं निर्मितं भवति स्म । समीपस्थानां दशाधिकग्रामाणां कृते जलस्रोतोरूपेण आसीत् एषा एका एव नदी । किन्तु यन्त्रागारेण एतत् चित्रमेव परिवर्तितम् आसीत् ।

यन्त्रागारात् निस्सृतं दूषितजलं नदीजलेन योजितम् आसीत् । एतेन मत्स्यानां संख्या न्यूना जाता । केदारेषु तत्र तत्र मृतपक्षिणः पतिताः दृश्यन्ते स्म । व्रीहेः उत्पादने न्यूनता जाता । यन्त्रागारतः ग्रामस्य नैसर्गिकपरिसरस्य हानिः जायमाना अस्ति इति ग्रामजनाः न अवगतवन्तः एव । अनन्तरदिनेषु श्वासकासपीडितजनानां संख्या अधिका अभवत् । श्वासम्बद्धाः, श्वासकोष-सम्बद्धाः च रोगाः अधिकाः अभवन् । स्नानार्थं तस्याः एव जलस्य उपयोगः भवति स्म इत्यतः चर्मविदारणं, कण्डूतिः, नेत्रतापः, नासिकाबाधा इत्यादयः परिणामाः दृष्टाः । यद्यपि तैः वैद्यः दृष्टः, चिकित्सा अपि कारिता, तथापि यन्त्रागारेण सह तस्य सम्बन्धः न कल्पितः । यदा अवसरः लभ्यते तदा चिकित्सकस्य सुन्दरस्य गणः जनेषु जागरणम् आनेतुं प्रायतत । किन्तु विशेषपरिणामः न दृष्टः एव । अतः अद्य विजयस्य शुनकः सन्त्रस्तः अभवत् ।





'राजन्समीपे विषयस्य उपस्थापनार्थम् एषः योग्यः अवसरः' इति चिन्तितवान् सुन्दरः । विजयः यन्त्रागारस्वामिनः राजन्वर्यस्य पुत्रः ।

'साक्षात् परिणामः स्वस्य गृहस्य उपरि जातः आसीत् इत्यतः प्रदूषणस्य समस्यां भिन्नदृष्ट्या राजन्वर्यः पश्येत्' इति आशा सुन्दरस्य । स्वेन चिन्तितम् उपायं सुन्दरः स्वस्य गणम् अवदत् । बालाः एतस्मिन् कार्ये भवन्तु इति सुन्दरस्य अपेक्षा आसीत् । किं करणीयम् इति सर्वैः मिलित्वा चिन्तितम् । यन्त्रागारतः निस्सृते जले स्थितस्य त्याज्यांशस्य शुद्धीकरणं कृत्वा पुनः प्रयोगः करणीयः इति तेषां सूचना आसीत् ।

यदा ते राजन्वर्यस्य गृहं प्राप्तवन्तः तदा उच्चस्वरेण कस्यचित् सम्भाषणं श्रुतम् । सः ध्वनिः आसीत् विजयस्य । विजयः सुखासने दुःखेन







उपविष्टवान् आसीत् । पार्श्वे उपविश्य तस्य पिता पुत्रस्य सान्त्वनं कुर्वन् आसीत् । सुन्दरं तस्य गणं च यदा विजयः दृष्टवान् तदा सः रोदनं स्थगयित्वा अन्तः गतवान् । राजन्वर्यः आगतान् अतिथीन् प्रश्नार्थकभावेन दृष्टवान् ।

तदा सुन्दरः – ''मणेः या दुरवस्था अभवत् सा कस्यचित् ग्रामीणस्य, कस्यचित् बालस्य वा मा भवतु इति अस्माकम् अपेक्षा । तदर्थं वयम् आगताः'' इति उक्तवान् ।

सुन्दरस्य वचनानि राजन्वर्यस्य हृदयम् अघातयन् । सः तान् सर्वान् अन्तः आहूय आसन्दे उपवेष्टुं निवेदितवान् । चिकित्सकः सुन्दरः यन्त्रागारेण कथं प्रदूषणं भवत् अस्ति, जीवस्य हानिः कथं भवति इति विवरणं कृतवान् ।

एतत्सर्वं श्रुत्वा प्रकोष्ठस्थः विजयः कठोर-स्वरेण – ''तर्हि मणिं भवान् एव मारितवान् खलु तात ? भवान् एव हननकर्ता । मम मणिम् इदानीमेव प्रत्यानयतु । मूकप्राणिनः हननसमये किं लज्जा न अनुभूता भवता ? मणिः सर्वदा अस्मासु प्रीतिं दर्शयति स्म । अस्माकं सेवां करोति स्म । कदा आरभ्य भवान् हननप्रवृत्तिमान् अभवत् ? कदाचित् मामपि मारयेत् भवान् । एवं ननु ?...'' इत्येवं पितुः निन्दनम् आरब्धवान् ।

चिकित्सकः सुन्दरः विजयस्य समीपं गत्वा स्कन्धे हस्तं स्थापयित्वा सान्त्वयन् – ''विजय ! पितुः निन्दां न करोतु । सः उद्देशपूर्वकम् एतत् न कृतवान् । अन्यच्च, सः स्वस्य दोषं परिष्करोति इत्यत्र मम पूर्णः विश्वासः अस्ति'' इति उक्तवान् ।

राजन्वर्यः पश्चात्तापेन पीडितः इव दृष्टः । यतः पूर्वं केचन एव तस्य दोषं निर्दिष्टवन्तः आसन् । किन्तु इदानीं तस्य पुत्रः एव पितुः दोषं प्रदर्शयन् आसीत्, 'हननकर्ता' इति कथयन् आसीत् । एतत् सोढुं न शक्तः सः । अतः सः सुन्दरस्य सूचनाः व्यवहारपथम् आनेतुम् इष्टवान् । सः तावदेव कर्तुं शक्नोति स्म ।

राजन्वर्यस्य नेत्रे विशिष्टा कान्तिः दृष्टा सुन्दरेण । नद्यां पुनश्च जीवरसप्रवाहः भविष्यति इति तेन ज्ञातम् । ग्रामीणाः पुनश्च निश्चिन्ततया श्वासोच्छ्वासं कुर्युः इति सः निर्णीतवान् ।

## हासस्य विषयः नायम् !?!





# विश्वासपात्रता

नामरूपपुरनामके ग्रामे नामदेवः नाम कश्चन बुद्धिमान् पुरुषः वसति स्म । किन्तु केचन तं वञ्चकं भावयन्ति स्म । नामदेवः तु तादृशान् उपेक्षया पश्यति स्म । ''केचन मम बुद्धिमत्तां वञ्चकतां भावयन्ति चेत् मम का हानिः ? ते तथा चिन्तयन्तु नाम'' इति वदति स्म सः ।

कदाचित् तद्ग्रामीणः मनोहरः महत्या विपदा ग्रस्तः जातः । वाणिज्ये तेन महती हानिः अनुभूता । अनन्यगतिकः सः स्वस्य भूमेः कञ्चित् भागं विक्रीतवान् । तथापि ऋणभारः न समाप्तः । मुकुन्दनामकात् सः ऋणं स्वीकृतवान् आसीत् । 'ऋणं प्रत्यर्पयतु' इति पुनः पुनः मनोहरं वदति स्म सः ।

नामदेव-मनोहरयोः मैत्री आ बाल्यात् अनुवर्तते । अतः मनोहरः कदाचित् नामदेवसमीपं गत्वा अवदत् – ''भवान् सज्जनः । यदि भवान् वदेत् तर्हि मुकुन्दः अङ्गीकुर्यात् । दशदिनात्मकप्रतीक्षां मुकुन्दः यथा कुर्यात् तथा अङ्गीकारयतु भवान् । तदभ्यन्तरे अहं कुतश्चित् धनं सङ्गृह्य ऋणं वृद्धिसहितं प्रत्यर्पयिष्यामि'' इति ।

नामदेवः क्षणकालं विचिन्त्य अवदत् – ''मुकुन्दः धनव्यवहारे निष्ठुरः । अतः मम वचनं सः न अङ्गीकुर्यात् । भवत्तः धनम् अहं दापयामि इति यदि वदेयं तर्हि सः अङ्गीकुर्यात् । किन्तु दशदिनाभ्यन्तरे भवान् धनं न दास्यति चेत् सः मत्तः बलात् स्वीकरिष्यति'' इति ।

''दशदिनाभ्यन्तरे अहम् ऋणं निश्चयेन प्रत्यर्पयिष्यामि । मयि पूर्णतः भवान् विश्वासं करोतु । भवन्तं कदापि कष्टे न पातयिष्यामि'' इति अवदत् मनोहरः ।

तदा नामदेवः अवदत् – ''मम पूर्णः विश्वासः अस्ति भवति । किन्तु मयि भवतः विश्वासः कियान् अस्ति इति न ज्ञायते । भवतः पत्न्या ध्रियमाणः वज्रखचितः कण्ठहारः मम पत्न्यै ददातु । सा सन्तोषेण

धरतु नाम । न्यासरूपेण दत्तम् इति मा चिन्तयतु । विश्वासद्योतकरूपेण ददातु'' इति उक्तवान् नामदेवः ।

स च वज्रखचितः कण्ठहारः पैतृकसम्पत्तिरूपेण प्राप्तः आसीत् मनोहरेण । कोट्यधिकरूप्यकमूल्यकं तत् । 'यदि एतत् नामदेवाय दीयेत तर्हि कदाचित् सः न प्रत्यर्पयेत् । तदा तस्य प्रतिप्राप्तौ महत् कष्टम् अनुभोक्तव्यं भवेत्' इति चिन्तयित्वा मनोहरः विना प्रतिवचनं ततः निर्गतवान् ।

नामदेवः सायं गृहस्य पुरतः उपविश्य मित्रैः सह जल्पन् प्रातः प्रवृत्तं श्रावयित्वा अवदत् - ''मानवेषु परस्परविश्वासः स्यात् । तादृशं विश्वासं प्रकटयितुम् असमर्थः मनोहरः कष्टं स्वयं स्वागतीकुर्वन् अस्ति । यदि तेन स च हारः मह्यं दीयेत तर्हि अहं किं तं न प्रत्यर्पयेयम् ? किम् अहं विश्वासपात्रं न ?'' इति ।

एषः वार्तालापः तद्ग्रामीणेन स्वर्णकारेण भूषणेन अपि श्रुतः । सः एकम् आभरणं गृहीत्वा नामदेवस्य गृहं गत्वा - ''मनोहरगृहे यादृशः हारः अस्ति तादृशः एव एषः अपि । किन्तु एतस्य मूल्यं सहस्ररूप्यकमात्रम् । मह्यम् इदानीं त्वरया किञ्चित् धनम् आवश्यकम् । भवान् एतं हारं स्वसमीपे संस्थाप्य मह्यं शतं रूप्यकाणि ददातु । कश्चन ज्योतिषिकः माम् उक्तवान् यत् भवादृशात् बुद्धिमज्जनतः ऋणं स्वीकृतं चेत् मदीया सम्पत्तिः वृद्धिं गमिष्यति इति । मासाभ्यन्तरे ऋणं प्रत्यर्प्य अहं मम हारं नेष्यामि'' इति ।

एतत् श्रुत्वा नामदेवः आश्चर्यं प्रकटयन्



अपृच्छत् - ''एतस्मिन् ग्रामे किं बुद्धिमताम् अभावः ? ऋणप्राप्त्यर्थं भवता किमर्थम् अहम् एव चितः ?'' इति ।

''भवान् स्वगृहस्य पुरतः उपविश्य विश्वासम् अधिकृत्य यत् उक्तवान् तत् मह्यं नितराम् अरोचत । भवादृशः विश्वासपात्रजनः ग्रामे अन्यः न स्यात् इति मया तदा एव निर्णीतम्'' इति उक्तवान् भूषणः ।

नामदेवः हारं प्राप्य भूषणाय शतं रूप्यकाणि दत्तवान् । मासानन्तरं भूषणः नामदेवसमीपम् आगत्य - ''भवदीयं धनं प्रत्यर्पयिष्यामि । मदीयं हारं प्रत्यर्पयतु कृपया'' इति न्यवेदयत् ।

तदा नामदेवः हसन् - ''भवता हारः मह्यं दत्तः इत्यत्र किमस्ति प्रमाणम् ? मम स्वभावं जानता अपि भवता हारः किमर्थं वा दत्तः ?



पत्रादिकं विना विश्वासमात्रेण व्यवहारः मूर्खतायै । अवगतं खलु ? भवता हारः दत्तः इत्यत्र नास्ति प्रमाणम् । अतः हारः न प्रत्यर्प्यते मया'' इति अवदत् ।

एतत् श्रुत्वा भूषणः कुपितः । सः ग्रामीणान् मेलयित्वा सर्वेषां पुरतः प्रवृत्तं सर्वम् उक्तवान् । तदा नामदेवः तेन उक्तं खण्डयन्– ''सहस्त्ररूप्यकमूल्यस्य हारं शतरूप्यक-मात्रदानेन स्वायत्तीकर्तुम् इच्छति एषः । विना साक्ष्यं किं कोऽपि स्वर्णकारः कस्मैचित् हारं दद्यात् ? असत्यवादी अयम्'' इति अवदत् ।

तत्र सम्मिलिताः सर्वे भूषणम् एव अपराधिनं मतवतः । ते भूषणं पृष्टवन्तः – ''भवतः कथनं विश्वासार्हं नास्ति । नामदेवः वञ्चयति इति अद्यावधि वयं चिन्तितवन्तः आस्म । किन्तु भवान् वञ्चनया तम् अपि अतिशेते इति भाति । किमर्थं भवता एवं कृतम् ?'' इति ।

तदा भूषणः – ''मया किमर्थम् एवं कृतम् इति ? वदामि, शृण्वन्तु । कश्चन चोरः चोरितम् एतं हारं नामदेवाय विक्रेतुम् इच्छन् मत्समीपम् आगत्य एतस्य मूल्यं पृष्टवान् । मया परीक्ष्य सहस्त्ररूप्यकमूल्यं निश्चितम् । नामदेवः शतं रूप्यकाणि दत्त्वा चोरतः हारं क्रीतवान् । एतदनन्तरं कदाचित् राजभटाः मद्गृहम् आगत्य एकं कृत्रिमं हारं प्रदर्श्य – 'यदि कोऽपि एतादृशं हारं विक्रेतुम् अत्र आगच्छेत् तर्हि वयं सूचनीयाः' इति उक्त्वा गताः । तस्मिन् एव दिने अहं नामदेवं दृष्ट्वा राजभटानाम् आगमनं निवेद्य – 'चोरितम् एतं हारं अधिकारिभ्यः प्रत्यर्पयतु' इति सूचितवान् । नामदेवः एतत् अनङ्गीकुर्वन् मां तर्जयन् – 'यदि एतत् रहस्यं भवान् अन्यान् वदेत् तर्हि भवन्तम् एव चोरम् उद्घोष्य

कारागारं प्रेषयिष्यामि' इति अवदत् । अतः अहम् उपायेन व्यवहरन् भवतां सर्वेषां पुरतः हारः कुत्र अस्ति इति निरूपितवान् अस्मि । हारः मत्समीपे नास्ति इत्यत्र भवन्तः एव साक्षिणः । एषोऽहम् अपवादात् मुक्तः'' इति वदन् ततः निर्गतवान् ।

आश्चर्यचकितस्य नामदेवस्य मुखात् एकम् अपि वचनं न निर्गतम् । 'भूषणः महता चातुर्येण व्यवहरन् मम दौर्बल्यम् अवलम्ब्य माम् एव कष्टजाले पातितवान्' इति अचिन्तयत् सः ।

अनन्तरदिने तस्य बन्धनार्थं राजभटाः आगताः । 'हारः मदीयः एव' इति नामदेवः समर्थयितुं न शक्तवान् । सः अधिकारिणे हारं समर्प्य द्विशतरूप्यकात्मकं दण्डम् अपि दत्त्वा कथञ्चित् कारागारगमनं निवारितवान् ।

अनन्तरदिने मार्गे गच्छता भूषणेन मिलित्वा सः अपृच्छत् – ''मया भवान् तु न वञ्चितः । तथापि भवता किमर्थम् एवं कृतम् ?'' इति ।

''मया किं वा कृतम् ? हारं दत्त्वा शतं रूप्यकाणि भवतः प्राप्तानि । पुनः शतं रूप्यकाणि प्रत्यर्प्य हारं प्रतिप्राप्तुं प्रयासः कृतः च । किन्तु भवान् एव लोभेन व्यवहरन् हारः मदीयः एव इति वदन् स्वयं कष्टे पतितवान्'' इति अवदत् भूषणः ।

''सत्यम् । मम कुटिलताम् एव अवलम्ब्य भवता अहं वञ्चितः'' इति उक्तवान् नामदेवः ।

तदा भूषणः हसन् अवदत् - ''मित्र ! स्मरतु । भवतः यावती बुद्धिमत्ता ततोऽपि अधिका अन्यस्यापि भवितुम् अर्हति इति । अहम् उत्तमानां विषये उत्तमः एव । मनोहरस्य साहाय्यं कृतं मया । मुकुन्दव्यवहारे मया प्रतिभूत्वम् अङ्गीकृतम् । मनोहरः समग्रं धनं दत्तवान् अपि । किन्तु भवता मनोहरस्य व्यवहारे वञ्चना सम्भाविता आसीत् । मां वञ्चयितुं प्रयासः च कृतः'' इति ।

म्लानमुखः नामदेवः निरुत्तरः जातः । अनन्तरकाले तेन कस्यापि वञ्चनार्थं प्रयत्नः न कृतः ।






# धनात् अपि श्रेष्ठम्

सीतापतिः कृषिकार्ये परिणतः । कृषिसम्बद्धान् सूक्ष्मविचारान् ज्ञातुं बहवः तस्य समीपम् आगच्छन्ति स्म । रघुपतिः सीतापतेः एकमात्रपुत्रः । सः गुणवान् बुद्धिमान् च । 'अध्ययनार्थं पुत्रं काशीं प्रेषयतु' इति जनाः सूचितवन्तः । सीतापतिः तेषां सूचनाम् अनुमतवान् । यतः तेन चिन्तितं यत् अध्ययनेन पुत्रः कृषिविषये इतोऽपि अधिकं ज्ञानं प्राप्य कृषेः वृद्धिं करिष्यति इति । वाराणस्याः कस्मिंश्चित् गुरुकुले शिक्षणप्राप्त्यर्थं तेन पुत्रः प्रेषितः ।

रघुपतिः गुरुकुलं प्रविश्य कृषिशास्त्रसम्बन्धिविचारान् अधीतवान् । विरामकाले यदा सः स्वगृहं गच्छति स्म, तदा पित्रा सह कृषिसम्बद्धविचारेषु समालोचनं करोति स्म । स्वपुत्रस्य ज्ञानं दृष्ट्वा सीतापतिः अपरिमितम् आनन्दम् अनुभवति स्म ।

कश्चन कालः अतीतः । रघुपतेः अध्ययनं समाप्तम् । किन्तु तावता नगरजीवनविषये तस्य आकर्षणम् अधिकं जातम् आसीत् । अतः कदाचित् सः साक्षात् पितरम् उक्तवान् - ''अहं नगरे महत् यन्त्रागारं स्थापयिष्यामि । प्रभूतं धनम् एतस्मात् सम्पादयिष्यामि'' इति ।

सीतापतये पुत्रस्य ग्रामत्यागः कृषित्यागः च न अरोचत । अतः सः पुत्रम् उक्तवान् - ''वत्स ! ग्रामे या शान्तिः भवति सा नगरे न उपलभ्यते । कृषिकार्यम् अस्माकं परिवारस्य वृत्तिः अस्ति । अस्मादृशानां कृषिकार्यम् एव शोभते । कृषितः यः आनन्दः, सः अन्यतः कुतो वा प्राप्येत ? लाभस्य वर्धनेन एव अधिकं सुखं प्राप्यते इति तु भवतः भ्रान्तिः एव'' इति ।

पितुः वचनानि रघुपतये न अरोचन्त । तेन स्पष्टतया उक्तम् - ''पितः ! अहम् अङ्गीकरोमि यत् कृषिकरणेन भवान् इतरेषाम् उदरं पूरयन् अस्ति इति । किन्तु यदा अहं यन्त्रागारं स्थापयिष्यामि, तदा अहम् अनेकेभ्यः कृषिकपुत्रेभ्यः उद्योगं दापयिष्यामि । यतः अहं कृषिकपरिवारे प्रवृद्धः अस्मि । तस्मात् मत्तः कृषिकाः लाभान् अपि प्राप्स्यन्ति'' इति ।

एतस्याः सुदीर्घचर्चायाः अनन्तरं सीतापतिः चिन्तितवान् यत् पुत्रस्य वचने अपि तथ्यम् अस्ति इति । अतः सः पुत्राय अनुमतिं दत्तवान् । किन्तु यन्त्रागारस्य आरम्भार्थं या लक्षाधिक



रूप्यकाणाम् आवश्यकता भवति तां पूरयितुं समर्थः ऋणदाता समग्रे ग्रामे कोऽपि नास्ति इति समस्या तम् अबाधत ।

"नगरे ऋणदातारः वणिजः बहवः भवन्ति । अस्माकं समग्रं क्षेत्रं न्यासरूपेण स्थापयामः चेत् यः कोऽपि कुसीदवणिक् महान्तं धनराशिम् अवश्यं दद्यात् । यन्त्रागारस्य आरम्भं कृत्वा अल्पकालावधौ एव वयं धनं प्रत्यर्पयिष्यामः" इति उक्तवान् रघुपतिः ।

तदा सीतापतिः उक्तवान् - "अहं मातृ-समानायाः अन्नदात्र्याः भूमेः, आश्रयभूतस्य पितृसमानस्य गृहस्य च विक्रयणं कदाचित् अपि न करिष्यामि । यदि कोऽपि मम वचने विश्वस्य धनं दातुं सिद्धः स्यात् तर्हि स्वी-करिष्यामि" इति ।

एतत् श्रुत्वा रघुपतिः नगरवासिनां केषाञ्चित् बन्धूनां नाम सूचयित्वा - 'ते धनं दद्युः' इति उक्तवान् । तदा सीतापतिः उक्तवान् - "पुत्र ! ते इदानीं कोट्यधीशाः सन्ति । सम्प्रति अस्माकं गृहं प्रति तेषां गमनागमनं स्थगितम् अस्ति । अहं यदा तान् प्रार्थयामि तदा यदि ते 'न' इति वदेयुः तर्हि मम महत् अपमाननं खलु ? अतः वचनमात्रे विश्वस्य धनं दातुं कोऽपि यदि सिद्धः स्यात् तर्हि तादृशस्य नाम वदतु । अहं स्वयं तम् ऋणं प्रार्थयिष्यामि" इति ।

"पितः ! भवतः वचनानि हिरण्यकशिपु-वचनसदृशानि सन्ति । मम साहाय्यकरणं भवान् न इच्छति इति एतस्मात् स्पष्टम् अभवत्" इति रघुपतिः खेदेन उक्तवान् ।

पुत्रस्य आक्षेपेण सीतापतिः अतीव खिन्नः । सः स्वस्य आर्जवं समर्थयितुम् इच्छन् तीव्रतया चिन्तितवान् । तदा तेन अकस्मात् कमला स्मृता ।

कमला सीतापतेः ज्येष्ठपितृव्यस्य पुत्री । वरदक्षिणाकारणतः तस्याः विवाहः यदा स्थगितः आसीत्, तदा सीतापतिः विवाहार्थम् आवश्यकं धनं दत्त्वा तस्याः साहाय्यम् आचरितवान् आसीत् । तस्मिन् दिने कमला सीतापतेः हस्तौ गृहीत्वा उक्तवती आसीत् - "आवश्यकतायां सत्याम् एतावता प्रमाणेन धनं दातुम् अस्माकं बन्धुषु कोऽपि अग्रे न आगतः । भवता कृतम् एतम् उपकारम् आजीवनं स्मरिष्यामि । मम पूर्णः विश्वासः अस्ति यत् भगवान् मह्यम् अपि एतादृशम् एकम् अवसरं दास्यति इति । तदा अहम् एतस्य प्रतिफलं दास्यामि" इति ।

निश्चयेन भगवता तस्याः प्रार्थना श्रुता । विवाहस्य अनन्तरं वर्षद्वयाभ्यन्तरे एव तस्याः पतिः उद्योगं परित्यज्य वाणिज्यम् आरब्धवान् । तदारभ्य तस्य जीवने धनवृद्धिः जायमाना आसीत् । सम्पादनं दिने दिने वृद्धिं गतम् । इदानीं सः कोट्यधीशः अस्ति ।



पुत्रेण सह सीतापतिः कमलायाः गृहं गतवान् । कमला तौ सन्तोषेण स्वागतीकृत्य सादरं सत्कृतवती । सीतापतिः विना विलम्बं स्वस्य आगमनकारणं तां निवेदितवान् ।

एतत् श्रुतवत्याः कमलायाः मुखं विवर्णं जातम् । सा उक्तवती - "भ्रातः ! मम पतिः कस्मैचिदपि ऋणदानं न इच्छति । किमपि कारणम् उक्त्वा ऋणयाचनार्थम् आगतान् प्रतिप्रेषयति सः । एकं दिनं तस्य चर्याः अवधानपूर्वकं पश्यतु । तदा ज्ञायते यत् सः किं किं कारणम् उक्त्वा जनान् प्रतिप्रेषयति इति । ततः भवता तादृशः कश्चन उपायः अन्वेष्टव्यः, येन सः केनापि कारणेन व्याजेन वा भवन्तं निराशं न कुर्यात् । एतावत् तु भवान् स्मरतु यत् अद्यपर्यन्तं तस्मात् कोऽपि ऋणं प्राप्तुं न शक्तवान् इति" इति ।

सीतापतिः ज्ञातवान् यत् कमला एतद्विषये निर्दोषा अस्ति, एतस्याः वचने किमपि कापट्यं नास्ति इति । विवाहिता स्त्री पत्युः इच्छायाः विरुद्धं गन्तुं न शक्नोति इति सः जानाति स्म । अतः तेन निश्चयः कृतः यत् कमलायाः मार्गदर्शनानुसारम् एव गन्तव्यम् इति ।

सः कमलायाः पत्या सह एव स्थित्वा अवधानपूर्वकं सर्वस्य अवलोकनम् आरब्धवान् ।

कश्चित् वरदक्षिणानिमित्तम् ऋणं याचितुं कमलायाः पत्युः समीपम् आगतवान् । कमलायाः पतिः तम् उक्तवान् - "ऋणस्वीकरणावसरे तस्य प्रत्यर्पणस्य मार्गः अपि चिन्तनीयः । वस्तुतः अहं वरदक्षिणाविरोधी अस्मि । अहं कदापि एतस्य समर्थनं न करोमि । अनावश्यकतया धनिकसम्बन्धं किमर्थम् चिन्तयन्ति भवन्तः ? स्वस्तरानुगुणं सम्बन्धम् अन्विष्य पुत्र्याः विवाहं निर्वर्तयन्तु तावत् । तदा एतादृशी ऋणस्वीकरणपरिस्थितिः एव न आगमिष्यति" इति ।

अपरः कश्चित् ऋणं याचितुम् आगतवान् । कमलायाः पतिः तम् उपदिष्टवान् - "भवतः पुत्रः प्रौढः पर्याप्तमात्रेण कृताध्ययनः च । तथापि भवान् मत्तः ऋणं याचितुम् आगतवान् । भवान् स्वपुत्रस्य विवाहं घोषयतु । तदा तच्छ्रवणमात्रेण अधिकाधिकवरदक्षिणां दातुम् अर्हाः बहवः भवतः गृहस्य पुरतः अनुपङ्क्तौ स्थास्यन्ति" इति ।

ऋणं याचितुम् आगतेन उक्तं -"अहं वरदक्षिणाविरोधी अस्मि" इति ।

तदा कमलायाः पतिः उक्तवान् - "यदि भवान् स्वस्य आदर्शं त्यक्तुं न इच्छति तर्हि अहं कुतो वा मम आदर्शं त्यजेयम् ? ऋणस्य अदानं मम आदर्शः । ऋणस्य अस्वीकाररूपम् आदर्शं यदि एकैकोऽपि पालयति, तर्हि समग्रे प्रपञ्चे

धनसम्बद्धानाम् समस्यानां परिहारः स्वयम् एव भविष्यति'' इति ।

कमलायाः पत्युः एतादृशस्य व्यवहारस्य दर्शनस्य अनन्तरं रघुपतिः सीतापतिः च सम्यक् अवगतवन्तौ यत् एषः कदाचिदपि ऋणं न दास्यति इति । तथापि सीतापतिः तस्मात् 'ऋणं पृच्छामि' इति निश्चितवान् । परन्तु रघुपतिः स्वपितरम् उक्तवान् - ''पितः ! अहं भवतः आदर्शम् अङ्गीकरोमि । यदि एषः ऋणदानं निराकुर्यात् तर्हि भवतः महत् दुःखम्, अपमाननं च भविष्यति । अतः वयम् इतः मौनेन गच्छाम । तदेव वरम्'' इति ।

सीतापतिः पुत्रस्य अभिप्रायं न अङ्गीकृतवान् । तस्यां रात्रौ सः कमलायाः पत्या सह सुदीर्घं वार्तालापं कृतवान् । लक्षरूप्यकात्मकम् ऋणं प्रार्थितवान् च ।

एतत् श्रुत्वा कमलायाः पतिः आश्चर्येण उक्तवान् - ''किमेतत् ? भवतः पुत्रः किं यन्त्रागारं स्थापयितुम् इच्छति ? तदपि नगरं गत्वा !! यदि भवतः पुत्रः भवतः विचाराणां, विश्वासस्य वा विरुद्धं गमनम् इच्छति, तर्हि अहं कदापि भवतः साहाय्यं न करिष्यामि । कृपया मत्तः साहाय्यनिरीक्षां न करोतु'' इति ।

तदा रघुपतिः उद्वेगेन उक्तवान् - ''मम विश्वासः, विचारश्च सत्त्वपूर्णः न इति खलु भवतः कथनस्य आशयः ?'' इति ।

''इतरेषां विश्वासस्य विचाराणां च तिरस्काररूपः कस्यापि आशयः कथं वा उत्तमः स्यात् ?'' इति पृष्टवान् कमलायाः पतिः ।

तस्य तेन उत्तरेण रघुपतिः ज्ञातवान् - 'यन्त्रागारस्य आरम्भार्थं पितुः सकाशात् अपि धनं न याचनीयम् । स्वावलम्बिता एव आश्रयणीया । अपि च स्वयं लक्ष्यपूर्णतायै आत्मा नियोजनीयः' इति ।

एतत् सत्यं जानन् रघुपतिः कमलायाः पतिम् उक्तवान् - ''भवतः सकाशात् ऋणं स्वीकर्तुं ये आगच्छन्ति, ते पूर्वमेव जानन्ति यत् भवान् ऋणं दातुं न इच्छति इति । तथापि ते किमर्थं भवतः सकाशम् आगच्छन्ति इति इदानीम् अहं सम्यक् अवगतवान् । अतः एव भवान् तेषां समस्यानां परिहारोपायं सूचयति । इदानीम् अहं ज्ञातवान् यत् मम पिता अपि एतत् ज्ञात्वा एव भवतः सकाशात् ऋणं याचितुम् आगतवान् । मम ज्ञानोदयः अभवत् । अहम् यन्त्रागारस्थापनायाः विचारं परित्यक्ष्यामि । कृषिकार्ये पितुः साहाय्यं करिष्यामि'' इति ।

रघुपतेः एतं निर्णयं श्रुत्वा तस्य पिता, कमलायाः पतिः च नितरां सन्तुष्टौ ।



## ६३. धृतराष्ट्रस्य वानप्रस्थाश्रयणम्

# महाभारतम्

युधिष्ठिरस्य, इतरयाज्ञिकानां च प्रश्नस्य उत्तररूपेण नकुलः अवदत् - "अहं असत्यं वदन् नास्मि । एषः यज्ञः कदापि दानस्य समानः न भवति । एतत् मया स्वयम् अनुभूतम् अस्ति । कुरुक्षेत्रे कश्चन मुनिसदृशः ब्राह्मणः वसति स्म । सस्येभ्यः पतितानि धान्यानि चित्वा जीवननिर्वहणं करोति स्म सः । तस्य गृहे पत्नी पुत्रः स्नुषा च आसन् । ते दिने सकृत् एव भोजनं कुर्वन्ति स्म ।

एकदा सर्वत्र क्षामः आगतः । सर्वेऽपि वृक्षाः शुष्काः अभवन् । दिने एकवारं भोजनप्राप्तिः अपि क्लेशय जातम् ।

एकदा मध्याह्नस्य तीक्ष्णे सूर्यातपे तैः किञ्चित् एव पिष्टं प्राप्तम् । तत् पक्त्वा भागचतुष्टयं कृत्वा यावत् ते भोजनार्थम् उद्युक्ताः तावता कश्चित् ब्राह्मणः अतिथिरूपेण आगतः । बुभुक्षितं तं सर्वे अन्तः आहूतवन्तः । अर्घ्यपाद्यादिकं दत्त्वा सत्कृत्य गृहस्वामिनः पुत्रः स्वस्य भागं तस्मै दत्तवान् । अतिथिः तत् खादितवान् । तथापि तस्य बुभुक्षा न शान्ता । तदा गृहस्वामी अपि स्वस्य भागं समर्पितवान् । अनन्तरं तस्य पत्नी स्नुषा चापि स्वभागस्य आहारं





दत्तवत्यौ । तत् सर्वं खादित्वा सन्तृप्तः सः अतिथिः अवदत् - 'अहं यमराजः अस्मि । भवद्भ्यः सर्वेभ्यः स्वर्गप्राप्तिरूपं वरं दातुम् आगतः अस्मि' इति ।

महाशयाः ! तदा अहं बिलात् बहिः आगतवान् । तस्य पिष्टस्य गन्धः मया आघ्रातः, तेन पिष्टजलेन अहं सिक्तः च । तत्कारणतः मम शिरसः, शरीरस्य च अर्धभागः सुवर्णमयः अभवत् । अहम् अवशिष्टम् अर्धभागम् सुवर्णमयं कर्तुम् इच्छन् अत्र आगतवान् अस्मि । किन्तु अत्र मम आशा अपूर्णा एव अतिष्ठत्'' इति ।

एवम् उक्त्वा सः नकुलः सर्वेषु पश्यत्सु एव अदृश्यः अभवत् ।

युधिष्ठिरः सहोदरैः सह राज्यभारं निर्वहन् आसीत् । विदुरः, सञ्जयः, युयुत्सुः च धृतराष्ट्रस्य सेवायां निरताः आसन् । कुन्ती सर्वदा गान्धार्या सह तिष्ठति स्म । द्रौपदी, सुभद्रा, पाण्डवानाम् इतराः पत्न्यः च सर्वदा गान्धार्याः योगक्षेमविषये चिन्तयन्ति स्म । व्यासमहर्षिः तदा तदा तत्र आगत्य कथाः श्रावयित्वा गच्छति स्म । युधिष्ठिरः कदाचिदपि धृतराष्ट्रस्य विरोधं न करोति स्म । धृतराष्ट्रः कामपि अपेक्षां प्रकटयति चेत् अनुक्षणं तस्याः पूरणे आदरं प्रकटयति स्म सः । धृतराष्ट्रः गान्धारी च पुत्रविरह-शोकं यथा न अनुभवेतां तथा व्यवहरन्ति स्म पाण्डवाः । भीमः एकः एव धृतराष्ट्रस्य विषये असन्तुष्टः आसीत् ।

एवं पञ्चदश वर्षाणि अतीतानि । गान्धार्या धृतराष्ट्रेण च कापि न्यूनता न अनुभूयते स्म । किन्तु तदा तदा भीमस्य कटुवचनैः तौ दुःखितौ भवतः स्म । किन्तु युधिष्ठिरः एतं विषयं न जानाति स्म ।

एकदा धृतराष्ट्रः युधिष्ठिरम् आहूय अवदत् - ''पुत्र ! अद्यपर्यन्तं भवान् आवाम् आदरेण दृष्टवान् । एतेन आवाम् अपि प्रसन्नौ स्वः । मया अनेकानि दानानि, धार्मिककार्याणि च अनुष्ठितानि । इदानीं मया तादृशं पुण्यम् अर्जनीयं नास्ति, येन मम व्यक्तिगतलाभः स्यात् । भवान् यदि अङ्गीकुर्यात् तर्हि अहं वानप्रस्थाश्रमं स्वीकर्तुम् इच्छामि । गान्धारी अपि मया सह स्थास्यति । अहं वने तिष्ठन् अपि भवतः आशीर्वादं कुर्वन् भवामि - सर्वदा भवतः कल्याणं भवतु इति'' इति ।

युधिष्ठिरः एतत् अनङ्गीकुर्वन् अवदत् -



''भवान् वने कष्टम् अनुभवन् यदा तिष्ठति तदा अहम् अत्र सुखेन कथं भवेयम् ? एतत् सर्वथा अनुचितम् । भवान् उपवासं कुर्वन् भूमौ शयनं करोति चेत् लोकः मां, मम भ्रातॄन् च किं न निन्देत् ? यदि भवान् वनं गच्छेत् तर्हि अहम् अपि एतत् राज्यं युयुत्सवे अर्पयित्वा भवता सह अरण्यम् आगमिष्यामि'' इति ।

तदा धृतराष्ट्रः - ''मम मनसि तपसः आचरणस्य प्रबला इच्छा उत्पन्ना अस्ति । वनवासस्य अभ्यासः अस्मद्वंशजानाम् अस्ति एव । बहूनि दिनानि भवता सह एव आसम् अहम् । अहम् इदानीं वृद्धः अभवम् । मम वनवासगमनं भवता अङ्गीकरणीयम् एव । वानप्रस्थाश्रमं स्वीकर्तु भवान् अनुमतिं न ददाति चेत् निरशनव्रतं करिष्यामि अहम्'' इति वदन् निरशनव्रतम् आरब्धवान् एव ।

तदा व्यासमहर्षिः तत्र आगत्य - 'धृतराष्ट्रः वानप्रस्थाश्रमं स्वीकरोतु' इति युधिष्ठिरं बोधितवान् । तदा युधिष्ठिरः अङ्गीकृतवान् । धृतराष्ट्रः निरशनव्रतं परित्यज्य भोजनग्रहणं कृतवान् ।

धृतराष्ट्रस्य वानप्रस्थगमनविचारं श्रुत्वा हस्तिनापुरस्य सर्वे पौराः तं द्रष्टुम् आगताः । धृतराष्ट्रः तान् उद्दिश्य - ''अहं गान्धारी च वनं गन्तुम् इच्छुकौ स्वः । आवयोः कृते भवद्भिः अनुमतिः दातव्या । अहं यथाशक्ति भवतां सेवां कृतवान् । मम शासनकालः कथम् आसीत् इति अहं न जानामि । यदि मया दोषः आचरितः स्यात् तर्हि क्षन्तव्यः अहम् । अस्माकं दुर्योधनस्य दुष्टबुद्धेः कारणतः क्षत्रियाणां विनाशः अभवत् । अत्र ममापि दोषः अस्ति । भवतः सर्वान् साञ्जलि प्रणम्य निवेदयामि यत् कृपया क्षम्यताम् इति । अद्य आरभ्य युधिष्ठिरः शासनं करिष्यति'' इति अवदत् ।

धृतराष्ट्रस्य वचनानि श्रुत्वा जनानां प्रतिनिधिरूपेण कश्चन ज्येष्ठः अग्रे आगत्य अवदत् - ''राजन्, भवान् अस्माभिः सह महता स्नेहेन एव व्यवहृतवान् । भवद्वंशीयः कोऽपि अस्माकम् अहितं न आचरितवान् । दुर्योधनः अपि अस्माकं विषये उत्तम-व्यवहारमेव दर्शितवान् । भवान् वनं यदि गच्छेत् तर्हि अस्माकं दुःखं भविष्यति । युद्धम् अपरिहार्यम् अभवत् यत् तत्र दुर्योधनस्य एव दोषः इति वयं न



चिन्तयामः । कुरुवंशस्य क्षयकारणं भगवान् एव, न अन्यः । युधिष्ठिरः उत्तमः पुरुषः । वयम् अपेक्षामहे यत् सः सहस्त्रं वर्षाणि शासनं करोतु इति'' इति ।

परेद्यवि प्रातः विदुरः युधिष्ठिरसमीपम् आगत्य अवदत् - ''पुत्र ! धृतराष्ट्रः कार्त्तिकमासे वनवासार्थं गमिष्यति । गमनात् पूर्वं सः भीष्मस्य, सोमदत्तस्य, बाह्लीकस्य, द्रोणस्य, सैन्धवस्य, स्वपुत्राणां च श्राद्धकर्म आचरितुम् इच्छति । अतः सः किञ्चित् धनम् इच्छति'' इति ।

विदुरस्य वचनं श्रुत्वा युधिष्ठिरः अर्जुनः च आनन्देन धनदानम् अङ्गीकृतवन्तौ । किन्तु भीमः मौनेन अतिष्ठत् । अर्जुनः भीमम् अवदत् - ''भवान् अपि किञ्चित् धनं ददातु । वानप्रस्थगमनात् पूर्वं श्राद्धं कर्तुं धनं याचमानः अग्नि धृतराष्ट्रः । धनदानम् अस्माकं कर्तव्यम्'' इति ।

तदा भीमः अवदत् - ''भीष्म-सोमदत्त-बाह्लीक-द्रोणादीनां श्राद्धार्थं धनं दातुं शक्यते । कर्णस्य श्राद्धार्थं कुन्ती धनं दद्यात् । किन्तु दुर्योधनादीनां श्राद्धार्थं अस्माभिः किमर्थं धनं दातव्यम् ? ते सद्गतिं न प्राप्स्यन्ति चेत् अस्माकं का हानिः ? अस्माभिः तु तेभ्यः विविधाः यातनाः अनुभूताः सन्ति'' इति ।

तदा युधिष्ठिरः भीमम् उद्दिश्य - ''भवतः मौनेन स्थितिः एव उचिता इति भाति'' इत्युक्त्वा विदुरम् अवदत् - ''भीमेन यत् उक्तं तत् श्रुत्वा खेदः अनुभोतव्यः नास्ति । धृतराष्ट्रः यावत् अपेक्षते तावत् धनम् अहं ददामि'' इति ।

ततः धृतराष्ट्रः महता प्रमाणेन श्राद्धकर्म आचरितवान्, युधिष्ठिरद्वारा दानानि दापितवान् च । कार्यक्रमस्य समाप्तेः अनन्तरदिने एव धृतराष्ट्रः गान्धार्या सह कार्त्तिकपूजां कृत्वा वल्कलवस्त्रं धृत्वा वनं प्रति प्राचलत् ।

तयोः पुरतः अग्निहोत्रिणः गच्छन्ति स्म । पृष्ठतः कौरवस्त्रियः आसन् । कुन्ती गान्धार्याः हस्तं गृहीत्वा चालयति स्म । द्रौपदी, सुभद्रा, परीक्षित्, उत्तरा इत्यादयः, नगरस्य नार्यः चापि तान् अनुसृतवत्यः । विदुरसञ्जयौ अपि तैः सह गमनस्य अनुमतिं प्राप्तवन्तौ आस्ताम् ।

धृतराष्ट्रः नगरस्य महाद्वारं क्रान्त्वा युयुत्सुं कृपाचार्यं च प्रतिगन्तुम् असूचयत् ।

एवम् एकैकशः सर्वे प्रतिगतवन्तः । अन्ते युधिष्ठिरः कुन्तीम् अवदत् - ''अम्ब ! भवती प्रतिगच्छतु । महाराजेन सह अहं गमिष्यामि'' इति ।

किन्तु कुन्ती अवदत् - ''पुत्र ! गान्धारीधृतराष्ट्रौ मम श्वशुरसमानौ । एतयोः सेवां कुर्वती अहम् अपि तपः आचरिष्यामि'' इति ।

सर्वेऽपि पाण्डवाः ताम् अवरोद्धुं प्रयत्नं कृतवन्तः । किन्तु सा कस्यापि वचनं न पुरस्कृतवती । अनन्यगतिकाः पाण्डवाः द्रौपद्या सह हस्तिनापुरं प्रत्यागताः ।

धृतराष्ट्रः सायं यावत् चलन् गङ्गातीरस्य कस्मिंश्चित् स्थाने अतिष्ठत् । विदुरसञ्जयौ धृतराष्ट्रस्य गान्धार्याः च निमित्तं कुशानां शय्यां सज्जीकृतवन्तौ । आनन्देन सा रात्रिः तैः यापिता ।

विदुरस्य सूचनानुसारं गङ्गातीरे एव धृतराष्ट्रस्य पर्णकुटी निर्मिता । तत्र कानिचन दिनानि स्थित्वा धृतराष्ट्रः कुरुक्षेत्रस्य कञ्चित् आश्रमं गतवान् । तत्र शतायूपनामकः कश्चित् राजर्षिः निवसति स्म । सः पुत्रे राज्यस्य उत्तरदायित्वं निक्षिप्य वानप्रस्थाश्रमं स्वीकृतवान् आसीत् । धृतराष्ट्रः तपस्याम् आरब्धवान् । तं द्रष्टुम् आगतवतां परिचर्या कुन्ती करोति स्म । धृतराष्ट्रः तपस्यायाः मध्ये अनेकाः कथाः शृण्वन् भवति स्म ।

धृतराष्ट्रस्य गमनानन्तरं नगरस्य शोभा कुण्ठिता जाता । प्रजाः सर्वाः वृद्धस्य राज्ञः विषये एव सम्भाषमाणाः भवन्ति स्म । पाण्डवानां स्थितिः अपि शोचनीया एव



आसीत् । धृतराष्ट्रेण सह मातुः अपि गमनस्य कारणतः जीवच्छवाः इव दृश्यन्ते स्म ते । कस्मिंश्चिदपि विषये तेषाम् आसक्तिः न आसीत् ।

सर्वाधिकतया सहदेवः व्याकुलः जातः आसीत् । सः मातरं द्रष्टुम् इच्छति स्म । द्रौपदी अपि युधिष्ठिरम् अवदत् -'' सर्वाः स्त्रियः गान्धारीं, धृतराष्ट्रं, कुन्तीं च द्रष्टुम् इच्छन्ति'' इति ।

अनुक्षणं युधिष्ठिरः धृतराष्ट्रस्य आश्रमं गन्तुं यात्रायाः व्यवस्थाम् अकरोत् । परेद्यवि एव यात्रा आरब्धा ।

तैः सह महत् सैन्यम् अपि प्राचलत् । रथम् अश्वम् उष्ट्रं च आरुह्य जनाः प्रस्थिताः । युयुत्सुः धौम्यः च राजगृहे एव स्थितवन्तौ । पाण्डवानाम् आगमनवार्तां

ज्ञात्वा आश्रमवासिनः तान् द्रष्टुम् आगताः। युधिष्ठिरः तान् अपृच्छत् - ''मम ज्येष्ठपितृव्यः कुत्र अस्ति ?'' इति।

''सः जलपुष्पादिकम् आनेतुं यमुना-नदीसमीपं गतः अस्ति'' इति अवदन् ते।

तैः निर्दिष्टेन मार्गेण गत्वा पाण्डवाः धृतराष्ट्रेण, गान्धार्या, कुन्त्या च मिलितवन्तः। सहदेवः झटिति धावन् गत्वा कुन्त्याः पादौ गृहीत्वा रोदनम् आरब्धवान्। सा अपि रोदनं कुर्वती सहदेवम् आलिङ्ग्य सान्त्वनं कृतवती।

पाण्डवाः तेषां पत्न्यः च आगत्य धृतराष्ट्रं परितः उपविष्टाः। अतः 'हस्तिनापुरे एव अस्मि' इति भावम् अनुभूतवान् धृतराष्ट्रः। आश्रमस्थाः सर्वेऽपि मुनयः पाण्डवान् द्रष्टुम् आगताः। सञ्जयः मुनिभ्यः पाण्डवानां परिचयं कारितवान्।

सर्वेषां गमनस्य अनन्तरं युधिष्ठिरः धृतराष्ट्रस्य कुशलप्रश्नादिकं पृष्ट्वा - ''विदुरः कुत्रापि न दृश्यते खलु ? कुत्र अस्ति सः ?'' इति अपृच्छत्।

तदा धृतराष्ट्रः अवदत् - ''विदुरः अन्नजले त्यक्त्वा तपस्यां कुर्वन् निर्बलः जातः अस्ति। ब्राह्मणाः वदन्ति यत् सः दिगम्बरः भूत्वा वने सञ्चरति इति'' इति।

धृतराष्ट्रस्य कथनस्य समाप्तेः पूर्वमेव दूरे विदुरस्य आगमनं दृष्टम्। युधिष्ठिरः एकाकी विदुरस्य समीपं गतवान्। विदुरः दुर्गमे अरण्ये तदा तदा अदृश्यः भवति स्म। तत् दृष्ट्वा युधिष्ठिरः धावन् उच्चस्वरेण - ''विदुर! अहं भवता मेलितुम् आगतवान् अस्मि'' इति अवदत्।

विदुरः अरण्ये कस्मिंश्चित् शून्यप्रदेशे अतिष्ठत्। ''अहं युधिष्ठिरः अस्मि'' इति कथयन् विदुरस्य पुरतः अतिष्ठत् युधिष्ठिरः। विदुरः अत्यन्तं दुर्बलः दृश्यते स्म। युधिष्ठिरः निर्निमेषं विदुरं पश्यन् आसीत्। विदुरस्य प्राणानाम्, अवयवानां च विलयनं स्वस्मिन् अनुभूतं युधिष्ठिरेण। किञ्चित्कालानन्तरं विदुरस्य शरीरं वृक्षवत् निश्चलम् अभवत्। युधिष्ठिरः विदुरस्य शवस्य अन्तिमसंस्कारं कर्तुम् इष्टवान्। किन्तु 'यतीनां दहनसंस्कारः धर्मविरुद्धः' इति स्मृत्वा सः स्वप्रयत्नं परित्यज्य आश्रमं प्रत्यागत्य तत्रत्यान् प्रवृत्तं सर्वं विवृतवान्। तत् श्रुत्वा सर्वे आश्चर्यचकिताः।



# बलम् उत्कोचः च

भूषणस्य पशुपतेः च क्षेत्राणि एकत्र एव आसन् । कदाचित् पत्न्योः कारणतः पशुपति-भूषणयोः मध्ये कलहः प्रवृत्तः । वाग्वादः अधिकः जातः । भूषणः पशुपतिं ताडितवान् । भूषणः बलवान् आसीत् । पशुपतिः दुर्बलः ।

क्षेत्रात् प्रत्यागच्छन् पशुपतिः आवेशपूर्णेन स्वरेण भूषणम् अवदत् - ''भूषण ! स्वस्य बलस्य विषये भवान् गर्वम् अनुभवति खलु । मम ताडने अपि सङ्कोचं न अनुभूतवान् भवान् । ग्रामाधिकारिणम् उक्त्वा भवतः चर्म निष्कासयिष्यामि । सत्यमेव जयति इति स्मरतु'' इति ।

तदा भूषणः - ''गच्छतु रे मूर्ख ! सत्यस्य जयः कदापि भवति किम् ? इदानीं किं प्रवृत्तम् इति दृष्टवान् खलु । भवतः मुखात् इतोऽप्यधिकतया यदि शब्दः निर्गच्छति तर्हि भवतः परिस्थितिः सम्यक् न स्यात् । गच्छतु'' इति वदन् अट्टहासं दर्शितवान् ।

पशुपतिः साक्षात् ग्रामाधिकारिणः समीपं गतवान् । सः ग्रामाधिकारी महान् उत्कोचग्राही आसीत् । यः अधिकम् उत्कोचं ददाति तदनुकूलतया निर्णयः भवति स्म ।

पशुपतिः प्रवृत्तं सर्वं निवेद्य - ''महाशय ! सः न केवलं मां ताडितवान्, अपि तु न्यायस्य उपहासं कुर्वन् बलस्य एव जयः, न्यायस्य न इत्यपि उक्तवान्'' इति खेदमिश्रितस्वरेण अकथयत् ।

तदा ग्रामाधिकारी मन्दहासं प्रदर्शयन् - ''भवान् भूषणः च मुग्धौ एव'' इति वदन् कोषस्थम् एकं नाणकं निष्कास्य उत्पीठिकायाः उपरि स्थापयन् 'पञ्चाशत्, पञ्चाशत्' इति अवदत् ।

पशुपतिना विषयः अवगतः आसीत् । सः ग्रामाधिकारिणं नत्वा गृहं प्रति गतवान् । मार्गे सः स्वगतं वदति स्म - ''क्षेत्रसमीपे बलस्य जयः अभवत्, न्यायालये धनस्य । विवादस्य परिहारः परस्परसमालोचनेन एव करणीयः । ततोऽप्यधिकं न्यायं कुत्रापि प्राप्तुं न शक्नुमः'' इति ।





# चञ्चलचित्तः

कश्चित् कृषिकः क्षेत्रे कर्षणसमये एकं सुवर्णपात्रं प्राप्तवान् । तत् दृष्टवतः तस्य मनः चञ्चलं जातम् । सः चिन्तितवान् – 'सुवर्णेन महत् वाणिज्यं कर्तुं शक्यते । धनिकेन भवितुं शक्यते । किन्तु तस्मात् अपायः अपि महान् अस्ति । यदि चोराः ज्ञास्यन्ति तर्हि लुण्ठनं करिष्यन्ति । तान् सम्मुखीकुर्मः चेत् अस्मान् मारयेयुः अपि ते !' इति ।

तावता अनतिदूरे गच्छन् न्यायाधिकारी तेन दृष्टः । सः चिन्तितवान् यत् एतत् सर्वं सुवर्णं न्यायाधिकारिणः हस्ते यदि दास्यामि, तर्हि केनापि प्रकारेण अपायः न भविष्यति इति । अतः सः धावन् न्यायाधिकारिणः समीपं गत्वा उक्तवान् – ''श्रीमन् ! भवान् कृपया एकवारं मम क्षेत्रम् आगच्छतु'' इति ।

न्यायाधिकारी कृषिकस्य वचनम् अङ्गीकृतवान् । उभौ अपि क्षेत्रं प्राप्तवन्तौ । एतावता कृषिकस्य मनः परिवर्तितम् अभवत् । सः न्यायाधिकारिणम् उक्तवान् – ''महाशय ! निर्णयदाने भवान् अतीव चतुरः अस्ति इति मया श्रुतम् । मम द्वयोः वृषभयोः कः श्रेष्ठः इति कृपया वदतु'' इति ।

एतं प्रश्नं श्रुत्वा कुपितः न्यायाधिकारी ततः निर्गतवान् । तस्य निर्गमनस्य अनन्तरं कृषिकस्य मनसि चिन्तनम् आगतम् –'एतत् सुवर्णं न्यायाधिकारिणः हस्ते मया किमर्थं न दत्तम् ? सर्वे यथा न पश्येयुः तथा एतस्य गोपनं कथं कर्तुं शक्नुयाम् ?' इति ।

सः आदिनम् एतत् एव चिन्तयन् आसीत् । क्षेत्रस्य कार्यं किञ्चिदपि न जातम् । सूर्यः अस्तं गच्छन् आसीत् । तदा ग्रामं प्रति आगच्छन् न्यायाधिकारी दृष्टः तेन । सः पुनः न्यायाधिकारिणः समीपं गत्वा उक्तवान् – ''पुनरेकवारं भवान् मम क्षेत्रम् आगच्छतु कृपया'' इति ।

पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा

न्यायाधिकारी चिन्तितवान् यत् कोऽपि अपायः जातः स्यात् इति । अतः सः कृषिकेण सह तस्य क्षेत्रं गतवान् । एतावता कृषिकस्य मनः पुनरपि परिवृत्तम् । सः न्यायाधिकारिणम् उक्तवान् – ''एतत् वदतु यत् मया कृतं ह्यस्तनकृषिकार्यं समीचीनम् अस्ति, उत अद्य कृतम् इति'' इति ।

न्यायाधिकारी कृषिकस्य एतं प्रश्नं श्रुत्वा एतस्य बुद्धिः नष्टा अस्ति इति चिन्तयन् ततः निर्गतवान् । न्यायाधिकारिणः गमनानन्तरं कृषिकः पुनः अचिन्तयत् – 'एतत् सुवर्णं न्यायाधिकारिणे मया किमर्थं न दत्तम् ? एतत् अहं कुत्र कथं गोपयानि ?' इति ।

अन्ते सः एकस्यां गोण्यां सुवर्णपात्रं स्थापयित्वा गोणीं स्कन्धे आरोप्य गृहं गतवान् । पत्नीम् उक्तवान् च – ''शृणोतु, वृषभौ बद्ध्वा तयोः कृते आहारं जलं च ददातु । मया शीघ्रं न्यायाधिकारिणः गृहं गत्वा आगन्तव्यम् अस्ति'' इति ।

पतिः स्वस्कन्धे स्थितां गोणीं न अवतारितवान् यत् तत् दृष्ट्वा कृषिकस्य पत्नी चिन्तितवती – 'एतस्मिन् किमपि रहस्यम् अस्ति । तत् रहस्यं मया ज्ञातव्यम्' इति । अतः सा पतिम् उक्तवती – ''मम कार्यं किं न्यूनम् अस्ति अत्र ? भवान् एव वृषभयोः बन्धनं करोतु । अहं धेनूनाम्, अजानां च आहारदानादिकं कुर्वती अस्मि'' इति ।

कृषिकः असहायः भूत्वा गोणीम् अधः स्थापयित्वा वृषभौ बन्द्धुं ततः गतवान् । तदवसरे कृषिकस्य पत्नी गोण्यां दृष्टिं प्रसार्य ज्ञातवती यत् पात्रे सुवर्णम् अस्ति इति । सा



झटिति सुवर्णपात्रं गोणीतः निष्कास्य तदाकारिकाम् एकां महतीं शिलां गोण्यां स्थापितवती । कृषिकः स्वकार्यं समाप्य प्रत्यागत्य, गोणीं स्कन्धे स्थापयित्वा साक्षात् न्यायाधिकारिणः गृहं गतवान् । ''महाशय ! भवते एकं पुरस्कारम् आनीतवान् अस्मि'' इति न्यायाधिकारिणम् उक्तवान् सः ।

पुरस्कारः महतः मूल्यस्य स्यात् इति विचिन्त्य न्यायाधिकारी गोणीम् उद्घाट्य दृष्टवान् । तत्र महतीं शिलां दृष्ट्वा सः आश्चर्यचकितः । कृषिकस्य अपि आश्चर्यम् ।

न्यायाधिकारी चिन्तितवान् यत् कृषिकस्य एतादृशव्यवहारे प्रबलं कारणं किमपि अस्ति इति । सः कृषिकं एकस्मिन् प्रकोष्ठे बन्धने स्थापितवान् । सः स्वकर्मकरान् आदिष्टवान् – ''रात्रौ कृषिकः किं किं जल्पति, किं किं

करोति, कथम् आचरति इत्यादिकं सर्वं परिशील्य मां वदन्तु'' इति ।

कृषिकः प्रकोष्ठे उपविश्य स्वगतं एव जल्पन् हस्ताभ्याम् अभिनयं कुर्वन् वदति स्म - ''अहो, एतावत् बृहत् पात्रम् ! एतावत् उन्नतम् ! तत्र एतावत् सुवर्णम्'' इति ।

कर्मकराः कृषिकस्य व्यवहारं न्यायाधिकारिणं निवेदितवन्तः । एतत् श्रुत्वा न्यायाधिकारी कृषिकम् आहूय पृष्टवान् - ''भ्रातः ! भवान् रात्रौ हस्ताभ्यां किमपि मापयन् इव आसीत् । तत् किम् ?'' इति ।

तदा कृषिकः धैर्यं धृत्वा उक्तवान् -''अहं भवतः एव मापनं कुर्वन् आसम् - भवतः शिरः एतावत् स्थूलम् अस्ति, भवतः कण्ठः एतावत्स्थूलः अस्ति, भवतः उदरम् एतावत् उन्नतम् अस्ति इति'' इति ।

कृषिकस्य वचनं श्रुत्वा न्यायाधिकारी अतीव क्रुद्धः । सः स्वसेवकान् आदिष्टवान् यत् एतं मूर्खं झटिति शूलम् आरोपयन्तु इति । सेवकाः कृषिकं वधस्थानं नीतवन्तः । शूलम् आरोपयितुं स्तम्भस्य व्यवस्था कृता । स्तम्भे रज्जुः स्थापिता । कृषिकस्य कण्ठे रज्जुबन्धनार्थं यदा तैः उद्युक्तं तदा कृषिकेण उक्तम् - ''स्थगयन्तु, न्यायाधिकारिणः सकाशे मम किञ्चन निवेदनम् अस्ति'' इति । सेवकाः कृषिकं न्यायाधिकारिणः समीपं नीत्वा तस्य अन्तिमाम् इच्छाम् उक्तवन्तः ।

''भवान् मां किं वक्तुम् इच्छति ? '' इति कृषिकं पृष्टवान् न्यायाधिकारी ।

''पश्यतु महाशय ! भवतः सेवकाः मम कण्ठे शूलारोपणरज्जुं स्थापयन्ति चेत् मम कण्ठः अवरुद्धः स्यात् । श्वासोच्छ्वासः स्थगितः भवेत्'' इति उक्तवान् कृषिकः ।

कृषिकस्य वचनं श्रुत्वा न्यायाधिकारी हसन् उक्तवान् - ''असम्बद्धप्रलापिनम् एतं मूर्खं त्यजन्तु'' इति । अनन्तरं कृषिकः स्वगृहं गतवान् । सुवर्णस्य कारणतः पत्न्या सह सुखेन जीवनं यापितवान् च ।



# भारतम् अवगम्यताम्

## प्रश्नोत्तरम्

डच्जनाः, पोर्चुगीसाः, फ्रेञ्चाः, आंग्लेयाः इत्यादयः बहवः भारतं वशीकर्तुं, स्वशासनम् अत्र प्रतिष्ठापयितुं च प्रयत्नं कृतवन्तः । किन्तु भारतीयाः तान् सम्मुखीकुर्वन्तः देशात् अपसारितवन्तः । किन्तु तेषु विदेशीयेषु केचन भारते प्रीतिं दर्शितवन्तः, भारतीयानां सेवां कृतवन्तः च । किं तान् अभिज्ञातुं शक्नुयुः भवन्तः ?

१. ब्रिटन्तः आगतः कश्चन मतप्रचारकः अत्रत्यानां सेवां श्रद्धया कृतवान् इत्यतः सः जनैः 'दीनबन्धुः' इति निर्दिष्टः । सः कः ?

२. सा का, या च ऐर्ल्याण्ड्देशतः आगत्य भारतं स्वस्य मातृभूमिं भावितवती, भारतस्वातन्त्र्यसङ्ग्रामे भागं गृहीतवती, अन्ताराष्ट्रियान्दोलनस्य नेतृत्वम् ऊढवती च, यस्य च केन्द्रकार्यालयः अस्ति मद्रास्(चेन्नै)नगरे ?

३. 'एषियाटिक् सोसैटि आफ् बेङ्गाल्' नामिका संस्था १७८९ तमे वर्षे केनचित् आङ्ग्लेयेन संस्थापिता । तस्य नाम किम् ? तस्य सिद्धिश्च का ?

४. सः फ्रञ्चदेशीयः कः, यश्च लखनवूनगरे कलकत्तानगरे च विद्यालयान् आरब्धवान् ?

५. सा आंग्लमहिला का, या च गान्धिवर्यस्य आत्मीया सती भारतीयं नाम प्राप्तवती ?

६. अलबेनियादेशीयः अग्नेस् गोंक्सा बोजाक्सिव् भारते नितरां प्रसिद्धिं प्राप्तवान्, तस्य भारतीयं नाम किम् ? *(उत्तराणि अग्रिमे मासे)*

### 'मे'प्रश्नावल्याः उत्तराणि

१. भारतीयः राष्ट्रध्वजः ।

२. राष्ट्रपितुः महात्मगान्धिवर्यस्य ।

३. एस् नम्बूदरीपादः । सः केरलराज्यस्य मुख्यमन्त्री आसीत् । प्रपञ्चे ऐदम्प्राथम्येन रचितस्य साम्यवादिसर्वकारस्य नायकः आसीत् सः ।

४. १९५२ तमे वर्षे । एशियाखण्डे एव ऐदम्प्राथम्येन एतत् प्रकाशनं प्रवृत्तम् ।

५. १९६१ तमे वर्षे । नवदेहल्याः शुभारम्भं निमित्तीकृत्य । ते च राष्ट्रपतिभवनं भारतद्वारं, संसद्भवनं च निर्दिशन्ति ।

६. २९११ तमे वर्षे फेब्रवरीमासस्य १८ दिनाङ्के । ६५०० पत्रादीनि अलहाबादतः नैनिकारागारं प्रति नीतानि ।

७. पोस्टल् इण्डेक्स् नम्बर् इति । १९७२ तमे वर्षे अगस्ट्मासस्य १५ दिनाङ्के ।

८. अष्टधा ।

९. १९३६ तमे वर्षे प्रथमं पत्रालयविधिं व्यवहारपथम् आनयता तेन तथा कृतम् ।

१०. चतुराणकात्मकाः मूल्याङ्काः।तेषु चतुर्विंशति-मूल्याङ्केषु आंग्लेयराज्ञ्याः शिरः विपरीतक्रमेण मुद्रितम् आसीत् ।

११. महात्मगान्धिवर्यः ।

१२. नवदेहल्याम् ।



# विचित्रः विजयः

कपिशानगरे माधवशर्मनामकः कश्चित् पण्डितः आसीत् । सः धनिकः अपि । तस्य एका एव पुत्री । तस्याः नाम श्यामला इति । सा अपि पिता इव महाबुद्धिमती आसीत् ।

श्यामला बुद्धिमती, सौन्दर्यवती च आसीत् इत्यतः अनेके युवकाः तां परिणेतुम् अग्रे आगताः । किन्तु श्यामला सर्वान् एकं प्रश्नं पृच्छति स्म । यदि समीचीनम् उत्तरं न लभ्यते तर्हि तान् प्रतिप्रेषयति स्म सा । 'मम प्रश्नस्य उत्तरं यः वदति तेन सह एव विवाहः' इति तया निश्चितम् आसीत् ।

तस्मिन् एव नगरे राधाकान्तनामकः कश्चन निर्धनः युवकः आसीत् । तदीयः पिता भिक्षाटनं कृत्वा पुत्रं पालयति स्म । राधाकान्तः अपि अत्यन्तं बुद्धिमान् आसीत् । सः विद्याप्रियः आसीत् । अतः सः अनेकेषां गुरूणां शुश्रूषां कृत्वा उत्तमं ज्ञानं प्राप्तवान् आसीत् । तथापि तस्य तृष्णा समाप्ता न अभवत् । सः इतोऽपि बहूनां विदुषां समीपं गत्वा अधिकं ज्ञानं प्राप्तुम् इच्छति स्म । अतः तस्य धनस्य आवश्यकता आसीत् । तदर्थं माधवशर्मणः समीपं धनसाहाय्यार्थम् आगतवान् राधाकान्तः ।

तेन श्रुतम् आसीत् यत् माधवशर्मणः पुत्री सुन्दरी इति । 'सा विवाहेच्छुकान् युवकान् प्रश्नं पृच्छति । प्रश्नस्य उत्तरं यः वदति तम् एव परिणेतुम् इच्छति सा' इत्यपि तेन ज्ञातम् आसीत् । किन्तु प्रश्नोत्तरविषयः राधाकान्त-सम्बद्धः न आसीत् । यतः आर्थिकसाहाय्य-प्राप्तिमात्रोद्देशेन सः तत्र आगतवान् आसीत् ।

किन्तु श्यामला चिन्तितवती यत् राधा-कान्तः अपि विवाहेच्छया आगतवान् अस्ति इति । अतः सा राधाकान्तम् उक्तवती - ''मम एकः सन्देहः अस्ति । अहं बहून् पृष्टवती । किन्तु कोऽपि तस्य समाधानं दातुं न शक्तः'' इति ।

''कः भवत्याः सन्देहः ? वदतु तावत्'' इति उक्तवान् राधाकान्तः ।

श्यामला अपृच्छत् - ''इहलोके परलोके

च कः सुखी तिष्ठति ? कः कष्टं सहते ?'' इति ।

''इहलोके परलोके च संन्यासी सुखी तिष्ठति । तस्य सांसारिकी चिन्ता न भवति । सः कस्यचित् वृक्षस्य च्छायायाम् अपि सुखेन शयनं कर्तुं शक्नोति । यत् लभ्यते तदेव तृप्त्या खादति सः । तस्य मनसि काऽपि आशा अपेक्षा वा न भवति । अतः सः कदापि निराशः न भवति । एवं सुखेन जीवनं यापयित्वा बन्धमुक्तः सः परलोकं गच्छति । अतः सः तत्रापि सुखी तिष्ठति । इहलोके परलोके च यः दुःखम् अनुभवति सः भिक्षुकः एव । तस्य इहलोकजीवने कष्टमेव भवति । सः आतपेन तपति, वृष्ट्या क्लिन्नः भवति, शैत्येन कम्पते च । तस्य पूर्णः समयः उदरपूरणचिन्तया एव यापितः भवति । तस्य उदरं कदापि पूर्णं न भवति । भिक्षाटनेन उदरपूरणं तस्मै न रोचते । किन्तु तदतिरिच्य अन्यः पर्यायः अवशिष्टः न भवति इत्यतः उदरम्भरणस्य चिन्ता सर्वदा तं बाधते । जीवने कस्यापि साहाय्यं कर्तुं न शक्नोति सः । अतः सः परलोके तिलमात्रम् अपि सुखं न अनुभवति'' इति उत्तरम् उक्तवान् राधाकान्तः ।

राधाकान्तस्य उत्तरेण सन्तुष्टा श्यामला 'राधाकान्तः एव परिणेतव्यः' इति मनसि एव निश्चितवती । किन्तु राधाकान्तस्य मनसि विवहस्य विचारः एव न आसीत् । सः धनसाहाय्यं प्राप्तुं तत्र आगतवान् आसीत् । श्यामलया सह वार्तालापेन राधाकान्तः एकं



विषयं ज्ञातवान् यत् श्यामलायाः साहाय्येन धनसाहाय्यं प्राप्तुं शक्यम् इति ।

अतः सः श्यामलाम् उद्दिश्य – ''अहं भवतीम् एकं प्रश्नं पृच्छामि । तस्य उत्तरं भवती दातुं न शक्नोति चेत् भवत्या पितुः द्वारा मम आर्थिकसाहाय्यं कारणीयम्'' इति उक्तवान् ।

श्यामला एतं प्रस्तावं सन्तोषेण अङ्गीकृतवती ।

ततः राधाकान्तः अपृच्छत् – ''अत्र सुखम् अनुभूय परलोके कः कष्टम् अनुभविष्यति ? अत्र कष्टम् अनुभूय अपि परलोके कः सुखेन स्थास्यति ?'' इति ।

श्यामला क्षणकालं विचिन्त्य उक्तवती – ''अत्र सुखं, परलोके कष्टं व दुष्टस्वभावः धनिकः अनुभवति । सः धनप्राप्त्याशया सर्वविधानि पापानि आचरति । बहूनां सुखं नाशयति । एतादृशं जीवनं यः यापयति सः कथं वा परलोके सुखी स्यात् ? अत्र कष्टं परलोके सुखं च अनुभवति योगी । सः अस्मिन् लोके सर्वविधसुखानि परित्यज्य शरीरं दण्डयति । मरणानन्तरं परलोके सुखेन स्थास्यति'' इति ।

स्वस्य प्रश्नस्य उत्तरं ज्ञात्वा राधाकान्तः निराशः अभवत् । 'मम प्रश्नस्य उत्तरम् एषा दत्तवती इत्यतः एतया एव जयः प्राप्तः । अतः एतां पराजित्य धनं प्रच्छनीयम् इति या मम योजना आसीत् सा विफला अभवत्' इति अचिन्तयत् राधाकान्तः ।

तावता माधवशर्मा तत्र प्रविशन् – ''पुत्र, भवान् मम पुत्र्याः प्रश्नस्य उत्तरं दत्तवान् अस्ति । सा भवन्तं परिणेतुं सिद्धा अस्ति । यदि एषः प्रस्तावः भवता अपि अनुमतः तर्हि अहं भवतोः विवाहं निर्वर्तयिष्यामि'' इति ।

एतया आकस्मिकघटनया राधाकान्तः आश्चर्यचकितः अभवत् । तस्य चिन्तनम् अन्यरूपेण परिणतम् इत्यतः तस्य कार्यम् सफलं जातम् आसीत् । सः श्यामलायाः परिणयार्थं स्वस्य अङ्गीकारं सूचितवान् । ततः शुभे मुहूर्ते तयोः विवाहः महता वैभवेन सम्पन्नः ।



चन्दमामाप्रस्तुतिः

# अजेयः गरुडः

कला - पाणिः

न्द्रपुर्याः महाराजः महेन्द्रदेवः दिवंगतस्य प्रधानमन्त्रिणः पुत्रम्
आदित्यम् आस्थानिकेषु अन्यतमं कृतवान् । आदित्यः जनान् पीडयतः लुण्ठाकानां गणम्
उन्मूलितवान् । प्रधानमन्त्रिणः मित्रस्य पुत्री अरुणा स्वपितुः, आदित्यस्य पितुः च मरणम्
एकस्याम् एव रात्रौ कथं जातम् इति उक्त्वा आदित्याय एकां
पेटिकां दत्तवती । तस्यां पेटिकायाम् एकं पुस्तकम् आसीत् ।
पुस्तके पितुः अक्षराणि आसन् ।

पराजयकारणतः कथं कद्रु-
पुत्राणां नागानां सेवा अङ्गी-
करणीया अभवत् इति
विषयं विनता पुत्रं गरुडं
विस्तरेण उक्तवती । ततः
गरुडः कद्रुं प्रार्थितवान् -
''मां मम मातरं च दास्यात्
विमुक्तौ करोतु'' इति ।

यदि भवान्
देवलोकं गत्वा अमृतम्
आनीय दद्यात् तर्हि भवन्तं
भवन्मातरं च दास्यात्
मुक्तौ करिष्यामि ।


सर्पाभ्यां रक्ष्यमाणम् अमृतकुम्भम् अन्वेष्टुम् उद्युक्तः अभवत् गरुडः । कुम्भं परितः अग्निः ज्वलति स्म । देवाः केचन तं रक्षन्ति स्म । गरुडः देवान् पराजित्य सर्पौ संहृत्य अग्निं निर्वाप्य अमृतकलशम् उन्नीय ततः प्रस्थितवान् ।
इन्द्रः गरुडं निग्रहीतुं वज्रायुधं प्रयुक्तवान् । ततः गरुडस्य पिञ्छमात्रं पतितम् । एतस्मात् इन्द्रः गरुडस्य अजेयत्वम् अवगतवान् ।
अमृतं देवानां कृते अस्ति । अन्येभ्यः मा ददातु कृपया ।


विमात्रे दर्शनीयम् एतत् । तदा एव मम, मातुः च मुक्तिः भविष्यति दास्यात् ।
किन्तु अहम् अन्येभ्यः पातुम् अवकाशं न ददामि । एतम् अमृतकुम्भं देवलोकं प्रति पुनः आनेष्यामि ।
अमृतपात्रं दृष्ट्वा कद्रुः नितरां सन्तुष्टा । सा गरुडं तन्मातरं विनतां च दास्यात् मुक्तौ कृतवती । यदा नागाः अमृतकुम्भसमीपम् आगताः तदा गरुडः कलशम् उन्नीय ततः निर्गतवान् ।




गरुडस्य एकः पिञ्छः हिमालये पतितः आसीत् । सः एकेन मुनिना प्राप्तः । सः तं पूजितवान्, अनन्तरम् अस्मत्पूर्वजेभ्यः दत्तवान् च । ते सर्वे राजानः आसन् । अस्मत्परम्पराजाताः सर्वे तस्य पूजां कृतवन्तः । षष्ठपरम्परायां जातः यदि एतं पूजयिष्यति तर्हि सः सुखी भविष्यति इति श्रूयते । भवान् तु षष्ठपरम्परायां जातः ।




मदनन्तरं भवता एतस्य पिञ्छस्य पूजा अनुवर्तनीया । प्रतिपूर्णिमम् एतस्य पूजा करणीया । तेन भवता अधिकशक्तिः बलं च प्राप्यते । तयोः उपयोगः भवता जनहितार्थं करणीयः । यथा गरुडः दास्यात् स्वमातुः मोक्षार्थं प्रयासं कृतवान् तथा भवता जन्मभूमेः चन्द्रपुर्याः स्वातन्त्र्यस्य निमित्तं प्रयासः करणीयः । रहसि मम सर्वे व्यवहाराः परिशील्यमानाः सन्ति कैश्चित् । गरुडः रक्षतु भवन्तम् ।


तात! अहं मातृभूमेः रक्षणं करिष्यामि ।



- अनुवर्तते

# एतन्मासे जातः महापुरुषः

## वि. सि. महालनोबिस्

सर्वेक्षणं भवद्भिः सर्वैः ज्ञातपूर्वम् एव खलु ? तत्र विविधोद्देशकविमर्शः, लब्धांशजालान्तर्भेदः (ऐ. एन्. पि. एस्.), भागचित्रविमर्शः इत्यादीनि तन्त्राणि, उपयुज्यन्ते । एतानि सर्वाणि तन्त्राणि विकासितानि भारतीयेन प्रशान्तचन्द्रमहालनोबिस्-वर्येण ।

एषः सङ्ख्याशास्त्रक्षेत्रे भारतस्य ख्यातिं वर्धितवान् अस्ति । एतस्य जन्म अभवत् १८९३ तमे वर्षे जूनमासस्य २९ तमे दिनाङ्के । कलकत्ताविश्वविद्यालयात् विज्ञानस्नातकप्रतिष्ठा-पदवीं (बि. एस्. सि. आनर्स्) प्राप्य केम्ब्रिज्-विश्वविद्यालयतः गणितविषये स्नातकोत्तरपदवीम् (एम. ए.) अपि प्राप्तवान् सः । एतदवसरे तेन आकस्मिकतया सङ्ख्याशास्त्रक्षेत्रे प्रवेशः कृतः । तस्य गुरुः डब्ल्यू. एच्. मेकाले उक्तवान् यत् भवता 'बयोमेट्रिका', 'बयोमेट्रिका टेबल्स्' इत्यादयः अध्येतव्याः इति ।

तादृशानां ग्रन्थानाम् अध्ययनतः प्रशान्तचन्द्रे तत्क्षेत्रीयाध्यायनासक्तिः प्रवृद्धा । सः १९१५ तमे वर्षे भारतं प्रत्यागतः । सः कलकत्तानगरे प्रेसिडेन्सीमहाविद्यालये भौतशास्त्रबोधकपदव्यां नियुक्तः जातः । किन्तु यदा यदा समयः प्राप्यते तदा सः सङ्ख्याशास्त्रस्य अध्ययनं करोति स्म ।

१९१७ तमे वर्षे कलकत्ताविश्वविद्यालयीयाः शिक्षणतज्ज्ञाः निर्णीतवन्तः यत् परीक्षाक्रमे परिवर्तनं करणीयम् इति । ते प्रशान्तचन्द्रवर्यस्य साहाय्यं प्रार्थितवन्तः । सः साङ्ख्यिकविमर्शक्रमम् अवलम्ब्य प्रश्नपत्रिका-छात्राध्यापकादीनाम् अंशानां विश्लेषणं कृत्वा यानि परिवर्तनानि सूचितवान् तानि सर्वाणि अनुमतानि, व्यवहारपथं गतानि च अभवन् ।

ततः सः मानविकशास्त्रं, साङ्क्रमिक-रोगशास्त्रम्, अन्तरिक्षविद्याशास्त्रम्, जनन-मरणोल्लेखशास्त्रम् इत्यादीनां बहूनां शास्त्राणां मार्गदर्शनं कृतवान् । १९३१ तमे वर्षे सः भारतीयसङ्ख्याशास्त्रसंस्थाम् आरब्धवान् ।

१९५० तमे वर्षे यदा योजनासमितिः आरचिता तदा महालनोबिस्वर्यः तस्याः प्रथमः उपाध्यक्षः जातः । तस्याः अध्यक्षः भवति प्रधानमन्त्री ।

महालनोबिस्वर्येण दूरपरिगणनार्थं कश्चन क्रमः अन्विष्टः अस्ति, यश्च तदीयनाम्ना एव



ख्यातः अस्ति । द्वयोः भौगोलिकस्थानयोः मध्ये स्थितम् अन्तरं परिमातुम् एषः क्रमः उपयुज्यते ।

१९४९ तमे वर्षे महालनोबिस्वर्यः भारतीय-राष्ट्रिय-आयकरसमितेः मुख्यः सन् राष्ट्रिय-सर्वेक्षणदायित्वं स्वीकृतवान् । १९४५ तमे वर्षे सः 'रायल्सोसैटी' इत्यस्याः सदस्यः जातः । १९६८ तमे वर्षे तेन पद्मविभूषणप्रशस्तिः प्राप्ता । विज्ञानक्षेत्रे तेन यत् महत् कार्यं कृतं तत् निमित्तीकृत्य सा प्रशस्तिः दत्ता तस्मै । १९७२ तमे वर्षे जूनमासस्य २८ तमे दिनाङ्के सः दिवं गतः ।




# चित्रशीर्षिकास्पर्धा







उपरितनं चित्रद्वयं दृष्ट्वा परस्परसम्बन्धिवाक्यद्वयेन चित्रशीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -

चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५

युक्ता शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यन्ते । पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

'एप्रिल्'मासीयस्पर्धाशीर्षिकाप्रेषकः -

सि. एस्. आर्. लिङ्गारेड्डी

गुरुकुर झज्जरं, झज्जर, हरियाणा - १२४ १०३

### पुरस्कृतशीर्षिका





अटनं खलु मम कर्म ।
तेजनं ननु मम वृत्तिः ।

The next twelve months will be eventful...

# CHANDAMAMA

## will bring you

- Brainrackers from your favourite Vetala
- Magical mythology
- Mindteasing contests to test and tease your skills
- Ribtickling humour to tickle your funny bones
- Fascinating feast of fables and fantasies
- Indiascope, which brings you the richness of Indian heritage
- Heritage puzzles and activity, special issues to mark occasions and lots more.....

Now you know why you *must* subscribe to Chandamama

CHANDAMAMA (Sanskrit) JUNE 2001 Registrar of Newspapers, India RN42664/85